KÂVYAMÂLÂ. 8



# THE SUBHÂSHITA-RATNA-SANDOHA OF AMITAGATI.

EDITED BY

PAṆḌIT BHAVADATTA S'ÂSTRÎ,

2nd Paṇḍit, Government College, Ajmer,

Son of

MAHÂMAHOPÂDYÂYA PAṆḌIT S'IVADATTA

Head Paṇḍit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆḌURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S 'NIRṆAYA-SÂGARA' PRESS.

BOMBAY.

1903.

*Price 12 Annas.*

काव्यमाला. ८२.



श्रीमदमितगतिविरचितः

# सुभाषितरत्नसंदोहः ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारककेदारनाथ-
कृपाङ्गीकृतशोधनकर्मणा
महामहोपाध्यायपण्डितशिवदत्तशर्मतनूजपण्डितभवदत्तशास्त्रिणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितः ।



स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।



१९०३







मूल्यं १२ आणकाः ।

# अमितगतिः ।

**सुभाषितरत्नसंदोह**कृती सुकृती श्रीम**द्दिगम्बर**जैनधर्मधृतिः श्रीमा**नमितगति**-
यतिः कदा कतमं धरामण्डलं मण्डयामासेति मीमांसायां बहुविधग्रन्थपर्यालोचने प्रवृत्ते—

'अलङ्घ्यमहिमालयो विपुलसत्त्ववान्रत्नधि-
र्वरस्थिरगभीरतो गुणमणिः पयोवारिधिः ।
समस्तजनता सतां श्रियमनश्वरीं देहिनां
सदा मदजलच्युतो विबुधसेवितो दत्तवान् ॥
तस्य ज्ञातसमस्तशास्त्रसमयः शिष्यः सतामग्रणीः
श्रीमान्**माथुर**संघसाधुतिलकः श्री**नेमिषेणो**ऽभवत् ।
शिष्यस्तस्य महात्मनः शमयुतो निर्धूतमोहद्विषः
श्रीमान्**माधवसेन**सूरिरभवत्क्षोणीतले पूजितः ॥
कोपारातिविघातकोऽपि सकृपः सोमोऽप्यदोषाकरो
जैनोऽप्युग्रतरस्तपोगतभवो भीतोऽपि संसारतः ।
निष्कामोऽपि समिष्टमुक्तिवनितायुक्तोऽपि यः संयतः
सत्यारोपितमानसो धृतवृषोऽप्यर्च्यप्रियोऽप्यप्रियः ॥
दलितमदनशत्रोर्भव्यनिर्व्याजबन्धोः शमदमयममूर्तिश्चन्द्रशुभ्रोरुकीर्तिः ।
**अमितगति**रभूद्यस्तस्य शिष्यो विपश्चिद्विरचितमिदमर्घ्यं तेन शास्त्रं पवित्रम् ॥
समारूढे पूतत्रिदशवसतिं विक्रमनृपे
सहस्रे वर्षाणां प्रभवति हि पञ्चाशदधिके (१०५०) ।
समाप्तं पञ्चम्यामवति धरणीं **मुञ्ज**नृपतौ
सिते पक्षे पौषे बुधहितमिदं शास्त्रमनघम् ॥'

इति **श्रावकाचार**-**धर्मपरीक्षा**द्यनेकग्रन्थकृतिश्रीम**दमितगति**यतिविरचित**सुभाषि**-

---

१. 'अभूत्समो यस्य न तेजसेनः स शुद्धबोधोऽजनि **देवसेनः** ।
मुनीश्वरो निर्जितकामसेनः पादारविन्दप्रणमद्रसेनः ॥
दोषान्धकारपरिमर्दनबद्धकक्ष्यो भूतस्ततो**ऽमितगति**र्भुवनप्रकाशः ।
तिग्मद्युतेरिव दिनः कमलावबोधी मार्गप्रबोधनपरो बुधवन्दनीयः ॥
विद्वत्समूहार्चितचित्रशिष्यः श्री**नेमिषेणो**ऽजनि तस्य शिष्यः ।
श्री**माथुरा**नूकनभःशशाङ्कः सदा विधूताहततत्त्वशङ्कः ॥
**माधवसेनो**ऽजनि महनीयः संयतनाथो जगति जनीयः ।
जीवनराशेरिव मणिराशी रम्यतमोऽतोऽखिलमिति राशिः ॥
तस्मादजायत नयादिव साधुवादः शिष्टार्चितो**ऽमितगति**र्जगति प्रतीतः ॥'
इति श्री**अमितगति**विरचितः **श्रावकाचारः** समाप्तः ।

२. 'संवत्सराणां विगते सहस्रे ससप्ततौ (१०७०) विक्रमपार्थिवस्य ।
इदं निषिद्धान्यमतं समाप्तं जिनेन्द्रधर्मामिति युक्तिशास्त्रम् ॥'
इत्य**मितगति**विरचिता **धर्मपरीक्षा** समाप्ता ।

तरलसंदोहसमासिपद्यपर्यालोचनतो मालवमण्डलाधीश्वरयशःपुञ्जश्रीमन्मुञ्जराज-समकालीनोऽयं कविस्तद्राजधान्यामेनं ग्रन्थं वैक्रमे १०५०=A. D. 994 शरदि प्राणैष्ट.

मुञ्जराजापरपर्यायवाक्पतिराजराज्यं च—

'याः स्फूर्जत्फणभृद्विषानलमिलद्धूमप्रभाः प्रोल्लस-
न्मूर्धाबद्धशशाङ्ककोटिघटिता याः सैंहिकेयोपमाः ।
याश्चाद्रिगिरिजाकपोललुलिताः कस्तूरिकाविभ्रमा-
स्ताः श्रीकण्ठकठोरकण्ठरुचयः श्रेयांसि पुष्णन्तु वः ॥
यल्लक्ष्मीवदनेन्दुना न सुखितं यन्नार्द्रितं वारिधे-
र्वारा यन्न निजेन नाभिसरसीपद्मेन शान्तिं गतम् ।
यच्छेषाहिफणासहस्रमधुरश्वासैर्न चाश्वासितं
तद्राधाविरहातुरं मुररिपोर्वेल्लद्वपुः पातु वः ॥

परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीकृष्णराजदेवपादानुध्यात-परमभट्टारकमहा-राजाधिराजपरमेश्वरश्रीवैरिसिंहदेवपादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वर-श्रीसीयकदेवपादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमदमोघवर्षदेवाप-राभिधानश्रीमद्वाक्पतिराजदेवपृथ्वीवल्लभश्रीवल्लभनरेन्द्रदेवः कुशली तिणिसपदद्वादश-

---

१. मुञ्जराजदेवस्य 'अमोघवर्षदेव–वाक्पतिराजदेव–उत्पलराज' इति नामान्तराणि. See Indian Antiquary, Vol. VI., P. 51–54; Navasâhasânka-charita and Tilaka-mañjarî.

२. श्रीकृष्णराजदेवस्य 'उपेन्द्रराज' इत्यपि नामान्तरम्. See Epigraphia Indica, Vol. I., P. 222–228 and Navasâhasânka-charita.

३. श्रीवैरिसिंहदेवस्य 'वज्रट' इत्यपि नामान्तरम्. See Epigraphia Indica, Vol. I., P. 222–228.

४. श्रीसीयकदेवस्य 'श्रीहर्ष–हर्ष–सिंहदन्त' इत्यपि नामान्तरम्. See Epigraphia Indica, Vol. I., P. 222–228; Navasâhasânka-charita and Prabandha-chintâmaṇi.

५. 'विवेकात्त्यक्तराज्येन राज्ञेयं रत्नमालिका ।
रचितामोघवर्षेण विदुषां सदलंकृतिः ॥'

इति प्रश्नोत्तररत्नमालाकर्तायमेवामोघवर्षः कश्चिदन्यो वेति संदेहः.

६. 'वाक्पतिराज' इति मुञ्जस्यैव नामान्तरं प्रतिभाति—

'प्रीत्या योग्य इति प्रतापवसतिः ख्यातेन मुञ्जाख्यया
यः स्वे वाक्पतिराजभूमिपतिना राज्येऽभिषिक्तः स्वयम् ।'

इति तिलकमञ्जर्यां धनपालेन मुञ्जेत्यपरपर्यायतया श्रीवाक्पतिराजस्य नाम

कसंबद्धमहासाधनिकश्रीमहाइकभुक्तसेलम्बपुरग्रामे समुपगतान्समस्तराजपुरुषान्ब्राह्मणोत्तरान्प्रतिवासिपट्टकिलजनपदादींश्च बोधयति—अस्तु वः संविदितम्—यथा ग्रामोऽयमस्माभिः षट्त्रिंशसहस्रिक (१०३६) संवत्सरेऽस्मिन्कार्तिकशुद्धपौर्णमास्यां

---

संकीर्तितम्. अपि च दशरूपकावलोके चतुर्थपरिच्छेदे धनिकपण्डितेन 'प्रणयकुपितां दृष्ट्वा देवीं–' इत्यादि श्लोकः श्रीवाक्पतिराजदेवनाम्ना समुद्धृतः. तत्रैव पुनरयं श्लोकः श्रीमुञ्जनाम्ना समुद्धृतः. एवमेव पिङ्गलसूत्रवृत्तौ भट्टहलायुधेन

'ब्रह्मक्षत्रकुलीनः प्रलीनसामन्तचक्रनुतचरणः ।
सकलसुकृतैकपुञ्जः श्रीमान्मुञ्जश्चिरं जयति ॥'
'जयति भुवनैकवीरः सीरायुधतुलितविपुलबलविभवः ।
अनवरतवित्तवितरणनिर्जितचम्पाधिपो मुञ्जः ॥'
'स जयति वाक्पतिराजः सकलार्थिमनोरथैककल्पतरुः ।
प्रत्यर्थिभूतपार्थिवलक्ष्मीहठहरणदुर्ललितः ॥'

'सप्तमः सप्तमादिः' (पिं० सू० ४।१९), 'अन्त्ये पञ्चमः' (पिं० सू० ४।२०) इत्येतत्सूत्रोदाहरणभूतास्वेतास्वार्यास्वार्याद्वये 'मुञ्ज' इति, तृतीयायां 'वाक्पतिराज' इति नामोपलभ्यते. अथ चैतद्दानपत्रस्य संवत्सरे (१०३६), 'सुभाषितरत्नसंदोहाख्यग्रन्थान्ते जैनेनामितगतियतिना

'समारूढे पूतत्रिदशवसतिं विक्रमनृपे
सहस्रे वर्षाणां प्रभवति हि पञ्चाशदधिके (१०५०) ।
समाप्तं पञ्चम्यामवति धरणिं मुञ्जनृपतौ
सिते पक्षे पौषे बुधहितमिदं शास्त्रमनघम् ॥'

इत्युक्ते मुञ्जमहीपतिराज्यसमये च स्वल्पमेवान्तरमस्ति. तस्मादस्ति 'वाक्पतिराज' इति मुञ्जस्यैव नामान्तरमिति प्रतीयते. मुञ्जराजापरनामवाक्पतिराजसमये उज्जयिन्येव राजधान्यासीदित्यस्माद्दानपत्रात्, Indian Antiquary, Vol. VI., P. 51–52 वाक्पतिराजदानपत्रात्,

'अस्ति क्षितावुज्जयिनीति नाम्ना पुरी विहायस्यमरावतीव ।
बबन्ध यस्यां पदमिन्द्रकल्पो महीपतिर्वाक्पतिराजदेवः ॥' (१।१७)

इत्यस्मात्परिमलकविप्रणीतनवसाहसाङ्कचरितकाव्यश्लोकाच्च प्रतीयते. धारानगरी तु भोजदेवेनैव राजधानीत्वं नीता.

'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥' (४।१४५)

इति राजतरङ्गिण्यां वर्णितो गौडवधाख्यमहाकाव्यकर्ता श्रीकमलायुधशिष्यः कान्यकुब्जाधीशयशोवर्मनरेन्द्राश्रितो वाक्पतिराजकविः खिस्ताब्दसप्तमशतकोत्तरार्धसमुद्भूत इत्यस्माद्भिन्नः. एवमेतत्तुल्यनामानो भूयांसो राजान उपलभ्यन्ते.

सोमग्रहणपर्वणि श्रीभगवत्पुरावासितैरस्माभिर्महासाधनिकश्रीमहाइकपत्नीआसिनी-प्रार्थनयोपरिलिखितग्रामः स्वसीमातृणयूतिगोचरपर्यन्तः सहिरण्याभोगभागः सोपरिकरः सर्वादायसमेतः श्रीमदुज्जयिन्यां भट्टारिकाश्रीमद्भट्टेश्वरीदेव्यै स्नानविलेपनपुष्पगन्धधूपनैवेद्यप्रेक्षणादिनिमित्तं च, तथा खण्डस्फुटितदेवगृहजगतीसमारचनार्थं च मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धयेऽदृष्टफलमङ्गीकृत्याचन्द्रार्कार्णवक्षितिसमकालं परया भक्त्या शासनेनोदकपूर्वकं प्रतिपादित इति मत्वा तन्निवासिपट्टकिलजनपदैर्यथादीयमानभागभोगः करहिरण्यादिकं सर्वमाज्ञाश्रवणविधेयैर्भूत्वा सर्वथा सर्वमस्याः समुपनेतव्यम् । सामान्यं चैतत्पुण्यफलं बुद्ध्वास्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मदायोऽयमनुमन्तव्यः पालनीयश्च । उक्तं च—

'वहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
अस्मत्कुलक्रममुदारमुदाहरद्भिरन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया दानं फलं परयशःप्रतिपादनं च ॥
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥

इति । संवत् १०३६=A. D. 980 चैत्रवदि ९। गुणपुरावासिते श्रीमन्महाविजयस्कन्धावारे स्वयमाज्ञादायकश्चात्र श्रीरुद्रादित्यः । स्वहस्तोऽयं श्रीवाक्पतिराजदेवस्य ।' (Indian Antiquary, Vol. XIV., P. 160.) इत्येतद्दर्शनेन, धर्मपरीक्षासमाप्तिपद्यदर्शनेन च, ख्रिस्ताब्ददशमैकादशोत्तरार्धपूर्वार्धयोरन्तरालभूता ख्रिस्ताब्दशतिका अमितगतियतिपतिसत्ताधारभूतावगम्यते. मुञ्जराजराजधान्येवास्य कवितुर्वासभूमिरिति. अनेनामितगतियतिपतिना कियन्तो ग्रन्था रचिता इति न निश्चीयते.

इदानीं श्रीमन्मालवमण्डलमण्डनमुञ्जराजराज्यसमयविवेचनसंदर्भावसरे 'श्रीमद्धारानगराधीशश्रीमद्भोजराजराजस्य पितृव्यः पितामहो वा श्रीमान्मुञ्जराजः' इत्यपि निर्णेतव्यतरविषयो दरीदृश्यते. तत्र च कियन्तो विद्वांसः 'परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसीयकदेवपादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीवाक्पतिराजदेवपादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसिन्धु-

१. श्रीसिन्धुराजस्य 'सिन्धुल–सिन्धल–कुमारनारायण–नवसाहसाङ्क' इति च नामान्तराणि. Vide Navasâhasânka-charita and Prabandha-chintâmaṇi. सिन्धुराजपर्यन्तमप्युज्जयिन्येव राजधान्यासीत्—

**राजदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**भोजराजदेवः** कुशली–' इति Indian Antiquary, Vol. VI., P. 53–54 स्थं श्रीमद्धारानगराधीशश्रीमद्भोजराजवितीर्णवैक्रम १०७८=A. D. 1022 संवत्सरीयदानपत्रान्तर्गतलेखम्, 'परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**वाक्पतिराजदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**सिन्धुराजदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**भोजदेव**–' इति Epigraphia Indica, Vol. III., p. 48–50स्थं श्रीमद्धारानगराधीशश्रीमज्जयसिंहमहाराजवितीर्णवैक्रम १११२=A. D. 1056 संवत्सरीयदानपत्रान्तर्गतलेखं च प्रमाणीकृत्य '**मुञ्जः** पितामहो **भोजस्य**' इति मन्वतेतराम्. परं त्वहमस्मिन्संदर्भे तत्प्रमाणीभूतप्रमाणाभासान्वक्ष्यमाणलेखेतिहासादिभिरपनेतुं स्वसंमतं च द्रढयितुमाशासेतराम्.

अथ च लेखेतिहासादयः—

'आयातस्य कदाचन क्षितिपतेराच्छिन्दतः कौशिक-
स्यातिथ्योचितवस्तुजातजननादानन्दिनीं नन्दिनीम् ।
निर्जेता कुपितेन तेन हविषा संहर्पिताद्वर्हिषो
वीरः श्री**परमार** इत्यनुपमः सत्याभिधानोऽभवत् ॥
राज्यवर्धनविशालधर्मभृत्सत्यकेतुपृथुकीर्तिपार्थिवः ।
वर्धतेऽयमहिमांशुचन्द्रमःसंततिप्रतिकृतिर्यदन्वयः ॥
वराजरामराजितोऽनलोद्भवः स भारतः ।
ग्रहेन्द्रचन्द्रयोरिव व्यजायतायमन्वयः ॥
वंशेऽस्मिन्**वैरिसिंहः** क्षितिपतिरभवद्भूरिभूतिप्रभाव-
प्रागल्भ्यौदार्यशौर्यप्रचयपरिचयप्राज्यसौराज्यसिद्धिः ।
नम्रक्ष्मापालभालस्थलदलितलुलत्कान्तकोटीरकोटि-
त्रुट्यन्माणिक्यचक्रस्थपुटितमणिमत्पादपीठोपकण्ठः ॥

---

'अस्ति क्षितावुज्जयिनीति नाम्ना पुरी विहायस्यमरावतीव ।
बबन्ध यस्यां पदमिन्द्रकल्पो महीपति**र्वाक्पतिराजदेवः** ॥' (१।१७)

इत्यादिश्लोकानन्तरं **नवसाहसाङ्कचरिते** चत्वारिंशच्छ्लोकै**रुज्जयिनी** वर्णिता. तदनन्तरम्—

'राजास्ति तस्यां स कुलाचलेन्द्रनिकुञ्जविश्रान्तयशस्तरङ्गः ।
भास्वान्ग्रहाणामिव भूपतीनामवाप्तसौख्यो धुरि **सिन्धुराजः** ॥'(१।५८)
'दोश्चन्दनानोकहमाप्य यस्य समुल्लसत्सान्द्रयशःप्रसूना ।
गतातिवृद्धिं लवलीलतेव निवद्धमूला **परमार**लक्ष्मीः ॥' (११७७)

इत्युज्जयिन्यामेव **सिन्धुराजो**ऽपि वर्णितः. **नवसाहसाङ्कचरितं** च **परिमलदेवेन सिन्धुराज**समये A. D. 1005 मिते वर्षे निर्मितम्.

सर्वाशाविजयप्रयाणसमये यस्येन्द्रनीलप्रभै-
र्मायूरातपवारणैः शुशुभिरे नष्टावकाशा दिशः ।
सर्पन्मत्तकरीन्द्रचक्रचरणप्राग्भारदीर्णस्थिरा
रन्ध्रोद्भूतविपण्णशेषसविषश्वासावरुद्धा इव ॥

पाताले वडवामुखानलमिषात्पृथ्वीतले च स्फुर-
त्सौवर्णाचलकैतवाद्वियति च ब्रह्माण्डखण्डच्छलात् ।
चमत्कारकनचक्रवालवलयव्याजाच्च दिङ्मण्डले
यस्याद्यापि समुल्लसत्यविचलीभूतः प्रतापानलः ॥

स्वर्लोकेषु च विद्विषत्क्षितिषु च व्यालेन्द्रगेहेषु च
स्वाराजं च रिपुव्रजं च मुरजिन्नागाधिराजं च यः ।
ऐश्वर्येण च विक्रमेण च धराभारक्षमत्वेन च
न्यक्कुर्वंश्च पराभवंश्च समतिक्रामंश्च पृथ्वीमपात् ॥

तस्माद्वैरिनृपावरोधनवधूवैधव्यदुःखोद्भव-
द्बाष्पाम्भःकणशान्तकोपदहनः श्रीसीयकोऽभून्नृपः ।
आविर्भावितनूतनस्थितिरयं ब्रह्माण्डखण्डच्छला-
द्यस्याद्यापि विलोक्यते वियदधो धूमः प्रतापानलः ॥

अनुगगनमुदस्थुः स्थूलमुक्तोच्चया ये यदसिदलितकुप्यत्कुम्भिकुम्भस्थलेभ्यः ।
सततमपि पतन्तस्तेऽद्य यावन्न पृथ्वीं पृथुलतरलताराव्याजभाजो भजन्ते ॥

अत्याश्चर्यमदृष्टमश्रुतमिदं कस्मै समाचक्ष्महे
को न्वेतत्प्रतिपद्यते च तदपि प्रस्तूयते कौतुकात् ।
उद्धृत्यापि वसुंधरामसदृशीं लब्ध्वापि लक्ष्मीं च यः
कुर्वन्कार्यमनेकशः सुमनसामागान्न वैकुण्ठताम् ॥

तस्माद्वैरिवरूथिनीबहुविधप्रारब्धयुद्धाध्वर-
प्रध्वंसैकपिनाकपाणिरजनि श्रीमुञ्जराजो नृपः ।
प्रायः प्रावृतवान्निपालयिषया यस्य प्रतापानलो
लोकालोकमहामहीध्रवलयव्याजान्महीमण्डलम् ॥

यस्मिन्सर्पति लीलयापि ललितैः सैन्यैः समुज्जृम्भितं
वाहव्यूहविसारिधूलिपटलव्यालुप्तदिग्मण्डलैः ।
अत्यद्रीन्द्रकरीन्द्रसंचयपदप्रेङ्खोलनोच्छृङ्खल-
प्रेङ्खच्छृङ्खलनादनिर्भरभृतब्रह्माण्डभाण्डोदरैः ॥

यन्निस्त्रिंशनिरस्तमस्तकतया लब्ध्वान्यथा दुर्लभं
देवत्वं स्वकबन्धमुद्धतमधो दृष्ट्वा भटैर्वेष्टितम् ।

---

१. देवानाम्, धीमतां च. २. विष्णुताम्, निश्चयेन कुण्ठताम्.

संहर्षोत्पततो विमानशिखरादाश्लिष्य कण्ठे हठा-
द्वीरान्संगररागिणो रुधिरे संभूय सिद्धाङ्गनाः ॥
तस्यासीदथ पार्थिवः पृथुयशाः श्रीसिन्धुराजोऽनुजः
स्फूर्जद्वाडवपावकस्फुटमहःसौन्दर्यशौर्यानलः ।
यः संग्रामयुगान्तवल्गितभुजादुर्वातदूरोल्लस-
त्कल्लोलायितमण्डलाग्रपटलेनामज्जयद्भूभृतः ॥
व्रजति जयिनि यत्रामित्रजातेन जज्ञे तरलतुरगवेगोद्धूतभूरेणुराजिः ।
विकटकरटिभारभ्रष्टभूपृष्ठरन्ध्रादुदित इव समन्तादन्तकालाग्निधूमः ॥
गाम्भीर्यं प्रलयार्णवस्य च बलं कल्पान्तवातस्य च
स्थेमानं कमठेशितुश्च गुरुतां ब्रह्माण्डभाण्डस्य च ।
तेजः कालहुताशनस्य च महीयस्त्वं ध्रुवकस्य च
स्वीकृत्येव विनिर्मितं यमविदुः प्रत्याजि पृथ्वीभुजः ॥
तत्सूनुर्भुवनैकभूषणमभूद्भूपालचूडामणि-
श्छायाडम्बरचुम्बिताङ्घ्रिकमलः श्रीभोजदेवो नृपः ।
यस्याद्यापि समाश्रयन्ति चरणौ शक्रासनाध्यासिनः
स्पर्धाबन्धविनम्रनिर्जरनटत्कोटीरकोटित्विषः ॥'

इति Epigraphia Indica, Vol. III., P. 182–88 स्थ Dr. F. Kielhorn, Ph. D., C. I. E. महाशयप्रकाशितविक्रम ११६१=A. D. 1105 वर्षोत्कीर्णपरमारवंशावतंसश्रीनरवर्मदेवकारितमन्दिरप्रशस्तिलेखान्तर्गतपद्यतः,

'अस्त्युर्वीध्रः प्रतीच्यां हिमगिरितनयः सिद्धदाम्पत्यसिद्धेः
स्थानं च ज्ञानभाजामभिमतफलदोऽखर्वितः सोऽर्बुदाख्यः ।
विश्वामित्रो वशिष्ठादहरत बलतो यत्र गां तत्प्रभावा-
ज्जज्ञे वीरोऽग्निकुण्डाद्रिपुबलनिधनं यश्चकारैक एव ॥
मारयित्वा परां धेनुमानिन्ये स ततो मुनिः ।
उवाच परमाराख्यः पार्थिवेन्द्रो भविष्यति ॥
तदन्ववायेऽखिलयज्ञसंघतृप्तामरोदाहृतकीर्तिरासीत् ।
उपेन्द्रराजो द्विजवर्गरत्नं शौर्यार्जितोत्तुङ्गनृपत्वमानः ॥
तत्सूनुरासीदरिराजकुम्भिकण्ठीरवो वीर्यवतां वरिष्ठः ।
श्रीवैरिसिंहश्चतुरर्णवान्तधात्र्यां जयस्तम्भकृतप्रशस्तिः ॥
तस्माद्बभूव वसुधाधिपमौलिमालारत्नप्रभारुचिररञ्जितपादपीठः ।
श्रीसीयकः करकृपाणजलोर्मिमग्नशत्रुव्रजो विजयिनां धुरि भूमिपालः ॥

---

१. 'प्रशस्तिरियमिदानीं पाषाणोल्लिखिता नागपुरप्रदर्शिन्यां वर्तते' इति Dr. F. Kielhorn, Ph. D., C. I. E. महाशयाः

तस्मादवन्तितरुणीनयनारविन्दभास्वानभूत्करकृपाणमरीचिदीप्रः ।
श्रीवाक्पतिः शतमुखानुकृतिस्तुरंगा गङ्गासमुद्रसलिलानि पिबन्ति यस्य ॥
जातस्तस्माद्वैरिसिंहोऽन्यनाम्ना लोको ब्रूते वज्रटस्वामिनं यम् ।
शत्रोर्वर्गं धारयासेर्निहत्य श्रीमद्धारा सूचिता येन राज्ञा ॥
तस्मादभूदरिनरेश्वरसंघसेनागजेन्द्रजेन्द्ररवसुन्दरतूर्यनादः ।
श्रीहर्षदेव इति खोट्टिगदेवलक्ष्मीं जग्राह यो युधि नगादसमप्रतापः ॥
पुत्रस्तस्य विभूषिताखिलधराभोगो गुणैकास्पदं
शौर्याक्रान्तसमस्तशत्रुविभवाधिन्याय्यवित्तोदयः ।
वक्तृत्वोच्चकवित्वतर्ककलनप्रज्ञातशास्त्रागमः
श्रीमद्वाक्पतिराजदेव इति यः सद्भिः सदा कीर्त्यते ॥
कर्णाटलाटकेरलचोलशिरोरत्नरागिपदकमलः ।
यश्च प्रणयिगणार्थितदाता कल्पद्रुमप्रख्यः ॥
युवराजं विजित्याजौ हत्वा तद्वाहिनीपतीन् ।
खड्ग ऊर्ध्वीकृतो येन त्रिपुर्यां विजिगीषुणा ॥
तस्यानुजो निर्जितहूणराजः श्रीसिन्धुराजो विजयार्जितश्रीः ।
श्रीभोजराजोऽजनि येन रत्नं नरोत्तमाकम्पकृदद्वितीयम् ॥'

इति Epigraphia Indica, Vol. I., P. 226-228 स्थ Dr. G. Bühler Ph. D., L. L. D., C. I. E. महाशयप्रकाशितमालवमण्डलाधिपतिमहीपतिप्रशस्तिलेखान्तर्गतपद्यतः,

'अस्त्याश्चर्यनिधानमर्बुद इति ख्यातो गिरिः खेचरैः
कृच्छ्राल्लङ्घितदिग्विलङ्घिशिखरग्रामोऽग्रिमः क्ष्माभृताम् ।
मैनाकेन महार्णवे हरतनौ सत्याप्रवेशे कृते
येनैकेन हिमाचलः शिखरिणां पुत्रीति लक्ष्योऽभवत् ॥
वासिष्ठैः स कृतस्मयो वरशतैरस्त्यग्निकुण्डोद्भवो
भूपालः परमार इत्यभिधया ख्यातो महीमण्डले ।
अद्याप्युद्गतहर्षगद्गदगिरो गायन्ति यस्यार्बुदे
विश्वामित्रजयोज्झितस्य भुजयोर्विस्फूर्जितं गुर्जराः ॥
तस्मिन्नभूद्रिपुकलत्रकपोलपत्रवल्लीवितानपरशुः परमारवंशे ।
श्रीवैरिसिंह इति दुर्धरसैन्यदन्तिदन्ताग्रभिन्नचतुरर्णवकूलभित्तिः ॥
तत्राभूद्वसतिः श्रियामपरया श्रीहर्ष इत्याख्यया
विख्यातश्चतुरम्बुराशिरसनादाम्नः प्रशास्ता भुवः ।
भूपः खर्वितवैरिगर्वगरिमा श्रीसीयकः सायकाः
पञ्चेषोरिव यस्य पौरुषगुणाः केषां न लग्ना हृदि ॥

तस्योदग्रयशाः समस्तसुभटग्रामाग्रगामी सुतः
सिंहो दुर्धरशक्रसिन्धुरततेः श्रीसिन्धुराजोऽभवत् ।
एकाधिज्यचतुर्जिताब्धिवलयावच्छिन्नभूर्यस्य स
श्रीमद्वाक्पतिराजदेवनृपतिर्वीराग्रणीरग्रजः ॥
आकीर्णाङ्कितलः सरोजकलशच्छत्रादिभिर्लाञ्छनै-
स्तस्याजायत मांसलायतभुजः श्रीभोज इत्यात्मजः ।
प्रीत्या योग्य इति प्रतापवसतिः ख्यातेन मुञ्जाख्यया
यः स्वे वाक्पतिराजभूमिपतिना राज्येऽभिषिक्तः स्वयम् ॥'

इति **मालव**मण्डलाधीशश्री**मन्मुञ्जराज**तदात्मज**भोजराज**महाराजसमकालीन**धनपाल**कविविरचित**तिलकमञ्जरी**प्रस्तावनापद्यपर्यालोचनतः,

'पुरा तस्मिन्मण्डले श्री**परमार**वंश्यः **सिंह[दन्त]भट**[1]नामा नृपती राजपाटिकायां परिभ्रमञ्शरवणमध्ये जातमात्रं रूपपात्रमतिमात्रं कमपि बालकमालोक्य पुत्रवात्सल्यादुपादाय देव्यै समर्पयामास । तस्य सान्वयं **मुञ्ज** इति नाम निर्ममे । तदनु **सिन्धलः, सिन्धुलः, सिन्धुराजो** वेति नाम्ना सुतः समजनि । निःशेषगुणपुञ्जमञ्जुल**मुञ्ज**स्य राज्याभिषेकचिकीर्षुर्नृपस्तस्य सौधमलंकुर्वन्नमन्दमन्दाक्षतया निजवधूं वेत्रासनान्तरितां विधाय प्रणामपूर्वं भूपतिमारराध । राजा तं प्रदेशं विजनमवलोक्य तज्जन्मवृत्तान्तमादित एव तस्मै निवेद्य 'तव भक्त्या परितोषितः सन् सुतं विहाय तुभ्यं राज्यं प्रयच्छामि' इति वदन् 'परमनेन **सिन्धल**नाम्ना बान्धवेन समं प्रीत्या वर्तितव्यम्' इत्यनुशास्तिं दत्त्वा तस्याभिषेकं चकार । तदनु—

भीमभूपसुतां **सिंहभटे**न मेदिनीभुजा ।
श्रीमतीं सन्महं **मुञ्ज**कुमारः परिणायितः ॥

स्वजन्मवृत्तान्तप्रसरशङ्किना तेन स्वदयितापि निजघ्ने । तदनु पराक्रमाक्रान्तभूतलः समस्तसज्जनचक्रवर्ति**रुद्रादित्य**नाम्ना महामात्येन चिन्तितराज्यश्चिरं सुखमनुभवन् कस्यामपि योषित्यनुरक्तश्चिरिकल्लाभिधकरभमधिरुह्य द्वादशयोजनीं निशि प्रयाति, प्रत्यायाति च । तया समं विश्लेषे जाते इमं दोधकं प्रैषीत्—

'[2]**मुञ्ज** पडल्ला दोरडी पेक्खिसि न गम्मारि ।
असाढि घण गज्जीइं चिक्खिलि होसेऽवारि ॥'

तं **सिन्धल**नामानं भ्रातरमुत्कटतयाज्ञाभङ्गकारिणं स्वदेशान्निर्वास्य सुचिरं राज्यं चकार । स **सिन्धलो गुर्जरदेशे** समागत्य **काशह्रद**नगरसंनिधौ निजां पल्लीं निवेश्य

---

१. **'श्रीहर्षदेव'** इत्यपि नामान्तरम्.

२. '**मुञ्ज** स्खलिता दवरकी प्रेक्षसे न जाल्म ।
आषाढीयो घनो गर्जति पिच्छिला भविष्यत्यधुना ॥' इति च्छाया.

दीपोत्सवे रात्रौ मृगयां कर्तुं प्रयातः । चौरवधभूमेः संनिधौ शूकरं चरन्तमालोक्य शूलिकायाः पतितं चौरशवमजानन् जानुनाधो विधाय यावत्प्रतिकिरि शरं सज्जीकुरुते तावत्तेन शवेन संकेतितः । ततस्तं करस्पर्शान्निवार्य शूकरं तं शरेण विदार्य यावदाकर्षति तावत्स शवोऽट्टहासपूर्वमुत्तिष्ठन् **सिन्धलेन** प्रोचे—'तव संकेतकाले शूकरे शरप्रहारः श्रेयान् । किं वाचबुध्य मया प्रदत्तः प्रहारः' इति । तद्वाक्यान्ते सच्छिद्रान्वेषी प्रेतस्तन्निःसीमसाहसेन परितुष्टो 'वरं वृणु' इत्यभिहितो 'मम बाणः क्षितौ मा पततु' इति याचिते 'भूयोऽपि वरं वृणु' इति श्रुत्वा 'मद्भुजयोः सर्वोपि लक्ष्मीः स्वाधीना' इति । तत्साहसचमत्कृतः स प्रेत इत्याह—'त्वया **मालवमण्डले** गन्तव्यम्' इति । 'तत्र श्री**मुञ्जराजः** संनिहितविनाशः, तथापि तत्र त्वया गन्तव्यमेव । तत्र तवान्वये राज्यं भविष्यति ।' इति तत्प्रेपितस्तत्र गत्वा श्री**मुञ्जराज**संपदः पदं कमपि जनपदमवाप्य पुनरुत्कटतया श्री**मुञ्जे**न निगृहीतनेत्रः काष्ठपञ्जरनियन्त्रितो **भोजं** सुतमजीजनत् । सोऽभ्यस्तसमस्तराजशास्त्रः षट्त्रिंशदायुधान्यधीत्य द्वासप्ततिकलाकूपारपारंगमः समस्तलक्षणलक्षितो ववृधे । तज्जन्मनि जातकविदा केनापि नैमित्तिकेन जातकं समर्पितम्—

> 'पञ्चाशत्पञ्च वर्षाणि मासाः सप्त दिनत्रयम् ।
> भोक्तव्यं **भोजराजेन** सगौडं दक्षिणापथम् ॥'

इति श्लोकार्थमवगम्य 'अस्मिन्सति मत्सूनो राज्यं न भविष्यति' इत्याशङ्क्यान्त्यजेभ्यो वधाय तं समर्पयामास ।

अथ तैर्निशीथे माधुर्यधुर्यां तन्मूर्तिमवधार्य तैर्जातानुकम्पैः सकम्पैश्च 'इष्टदेवतं स्मर' इत्यभिहिते—

> 'मान्धाता स महीपतिः कृतयुगालंकारभूतो गतः
> सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः ।
> अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते
> नैकेनापि समं गता वसुमती **मुञ्ज** त्वया यास्यति ॥'

इदं काव्यं पत्रके आलिख्य तत्करेण नृपतये समर्पयामास । नृपतिस्तद्दर्शनात्खेदमेदुरमना अश्रूणि मुञ्चन् भ्रूणहत्याकारिणं स्वं निनिन्द ।

अथ तैस्तं सबहुमानमानीय युवराजपदवीदानपूर्वं संमान्य **तिलिङ्ग**देशीयराज्ञा श्री**तैलिपदेव**नाम्ना सैन्यप्रेषणे राकान्तो रोगग्रस्तेन **रुद्रादित्य**नाम्ना महामात्येन निषिध्यमानोऽपि तं प्रतिष्ठासु**र्गोदावरीं** सरितमवधीकृत्य 'तामुल्लङ्घ्य प्रयाणकं न कार्यम्' इति शपथदानपूर्वं व्यासिद्धोऽपि 'तं पुरा पोढानिर्जितम्' इत्यवज्ञया पश्यन्नतिरेकवशात्तां सरितमुत्तीर्य स्कन्धावारं निवेशयामास । **रुद्रादित्यो** नृपतेर्वृत्तान्तमवगम्य कामपि भाविनीमविनीततया विपदं विमृश्य स्वयं चितानले प्रविवेश ।

अथ **तैलिपेन** तत्सैन्यं छलबलाभ्यां हतविप्रहतं कृत्वा मुञ्जरज्वा विवध्य श्री**मुञ्ज-राजो** जगृहे। कारागृहे निहितः काष्ठपञ्जरनियन्त्रितो **मृणालवत्या** तद्भगिन्या परिचार्यमाणस्तया सह जातकलत्रसंबन्धः। पाश्चात्यैर्निजप्रधानैः सुरङ्गादानपूर्वं तत्र ज्ञापितसंकेतः कदाचिद्दर्पणे स्वं प्रतिबिम्बं पश्यन्नज्ञातवृत्त्या पृष्ठतः समागताया **मृणालवत्या** वदनप्रतिबिम्बं जराजर्जरं मुकुरे निरीक्ष्य यूनः श्री**मुञ्जस्य** वदनसामीप्यात्तद्विशेषविच्छायतया तां विषण्णामालोक्यैवमवादीत्—

'**मुञ्ज** भणइ **मुणालवइ** जुव्वण गयुं न झूरि।
जइ सक्कर सयखण्ड थिय तो इस मीठी चूरि॥'

इति तां संभाष्य स्वस्थानं प्रति यियासुस्तद्विरहासहो भयात्तं वृत्तान्तं ज्ञापितुमशक्तो भूयो भूयः प्रोच्यमानोऽपि तां चिन्तामनुचरन् अलवणातिलवणरसवतीं भोजितोऽपि तदास्वादानवबोधात्तया निर्बन्धबन्धुरया गिरा सप्रणयं पृष्टः प्राह—'अहमनया सुरङ्गया स्वस्थाने गन्तास्मीति चेद्भवती तत्र समुपैति तदा महादेवीपदेऽभिषिच्य प्रसादफलं दर्शयामि' इत्यभिहिते 'यावदाभरणकरण्डिकामुपनयामि तावत्क्षणं प्रतीक्षस्व' इत्यभिदधानासौ कात्यायनी 'तत्र गतो मां परिहरिष्यति' इति विमृशन्ती स्वभ्रातुर्भूपतेस्तं वृत्तान्तं निवेद्य विशेषतो विडम्बनाय बन्धनबद्धं कारयित्वा प्रतिगृहं भिक्षाटनं कारयामास। स प्रतिगृहं परिभ्रमन्निर्वेदमेदुरतयेमानि वाक्यानि पपाठ। तथाहि—

---

१. " He says that Muñja had conquered the Chalukya Tailapa II. sixteen times, before he undertook his last expedition, in which he lost his throne and his life, and that he hence despised him. " (*Vide* Epigraphia Indica, Vol. I., P. 227.)

२. 'इतस्तैलिपदेवस्य पित्रा **देवलभूभुजा**।
पत्नीस्थाने कृता दासी **सुन्दरी**त्यभिधा पुनः॥ ६९॥
पुत्रीं **मृणालवत्या**ह्वां सूते स्म **सुन्दरी** पराम्।
वर्धयामास माता च तां स्तन्यादिप्रदानतः॥ ७०॥
वर्धमाना क्रमात्प्राप्ता यौवनं भगिनी पुनः।
दत्ता **तैलिपदेवेन श्रीपुरे चन्द्र**भूपतेः॥ ७१॥
**चन्द्रो** यदागमच्छूलरोगेण यममन्दिरम्।
सापि **तैलिपदेवस्य** भ्रातुर्गेहमुपागमत्॥ ७२॥
स्वसा **तैलिपदेवस्य** रण्डा **मृणालवत्य**थ।
भक्तपानादि **मुञ्जस्य** चक्रे भ्रातृनिदेशतः॥ ७३॥' इतीतिहासान्तरात्.

३. '**मुञ्जो** भणति **मृणालवति** यौवनं गतं न खिद्यस्व।
यदि शर्करा शतखण्डा स्थिता तदप्येषा मिष्टा चूर्णिता॥' इति च्छाया.

'[1]सउचित्तहरिसट्ठी मम्मणहवत्तीस डीहियां ।
हिअम्मि ते नर दट्ठ सीझे जे वीससइं थियां ॥
[2]झाली तुट्टी किं न मुउ किं न हूयउ छारपुञ्ज ।
हिण्डइ दोरीबन्धीयउ जिम मङ्कड तिम मुञ्ज ॥'

तथा च—

'[3]गयगयरहगयतुरयगयपायक्कडा निभिच्च ।
सग्गट्ठिय करि मन्तण उम्मुहुं ता रुद्दाइच्च ॥'

अथास्मिन्नवसरे कस्यापि गृहपतेर्गृहे भिक्षानिमित्तं नीतः । पड्डुकपाणीं तत्पत्नी तक्रं पाययित्वा गर्वोद्धुरकन्धरां भिक्षादाननिषेधं विदधतीं मुञ्जः प्राह—

'[4]भोलि मुन्धि म गव्वु करि पिक्खि वि पड्डुगुपाइं ।
चउदसइ सइं छहुत्तरइं मुञ्जह गयह गयाइं ॥
मा मङ्कड कुरुद्वेगं यदहं खण्डितोऽनया ।
रामरावणमुञ्जाद्याः स्त्रीभिः के के न खण्डिताः ॥
रे रे यन्त्रक मा रोदीर्यदहं भ्रामितोऽनया ।
कटाक्षाक्षेपमात्रेण कराकृष्टौ च का कथा ॥
[5]जा मति पच्छइ सम्पज्जइ सा मति पहिली होइ ।
मुञ्ज भणइ मृणालवइ विघन न वेढइ कोइ ॥
यशःपुञ्जो मुञ्जो गजपतिरवन्तिक्षितिपतिः
सरस्वत्यावासः समजनि पुरा यः कृतिरिति ।
स कर्णाटेशेन स्वसचिव[वि]बुद्ध्यैव विधुतः
कृतः शूलारोपस्त्वहह विषमाः कर्मगतयः ॥

---

१. 'सर्वचित्तहर्षार्थे मन्मथवार्तायां दाक्षिण्यायाम् ।
हृदये ते नरा दृढं खिद्यन्ते ये विश्वसन्ति स्त्रियाम् ॥' इति च्छाया.

२. 'ज्वलित्वा त्रुटित्वा किं न······किं न भवेयं भस्मपुञ्जः ।
हिण्डति दवरकबद्धो यथा मर्कटस्तथा मुञ्जः ॥' इति च्छाया.

३. 'गतगजरथगततुरगगतपद्गो निर्भृत्यः ।
स्वर्गस्थितः कुर्वामन्त्रणं······ तस्माद्रुद्रादित्य ॥' इति च्छाया.

४. 'अङ्गे मुग्धे मा गर्वं कुरु प्रेक्ष्यापि लघुपिठरपाणिम् ।
चतुर्दशशतानि षड्त्तराणि मुञ्जस्य गजानां गतानि ॥' इति च्छाया.

५. 'या मतिः पश्चात्संपद्यते सा मतिः प्रथमा भवेत् ।
मुञ्जो भणति मृणालवति विघ्नं न वहति कोऽपि ॥' इति च्छाया.

सुहृद्देवेन्द्रस्य क्रतुपुरुपतेजोंशजनकः
प्रमीतः शय्यायां सुतविरहदुःखाद्दशरथः ।
ज्वलत्तैलद्रोण्यां निहितवपुपस्तस्य नृपते-
श्चिरात्संस्कारोऽभूदहह विपमाः कर्मगतयः ॥

आपद्गतं हससि किं द्रविणान्धमूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
किं त्वं न पश्यसि घटीजलयन्त्रचक्रे रिक्ता भवन्ति भरिताश्च पुनश्च रिक्ताः ॥

अलंकारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृप एको वहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥
सायर पाई लङ्क गढ गढवइ दससिरु राउ ।
भग्गक्खय सो भज्जिगय **मुञ्ज** म करि विसाउ ॥'[1]

इत्थं सुचिरं भिक्षां भ्रामयित्वा वध्यभूमौ नृपादेशाद्वधविधौ नीतः । तैरुक्तम्—'इष्टं दैवतं स्मर ।'

'लक्ष्मीर्यास्यति गोविन्दे वीरश्रीर्वीरवेश्मनि ।
गते **मुञ्जे** यशःपुञ्जे निरालम्बा सरस्वती ॥'

इत्यादि तद्वाक्यानि यथाश्रुतमवगन्तव्यानि । तदनु **मुञ्जं** निहत्य तच्छिरो राजाङ्गणे शूलिकाप्रोतं कृत्वा नित्यं दधिवेष्टितं कारयन्निजममर्पं पुपोष ।

अथ **मालवमण्डले** तद्वृत्तान्तवेदिभिः सचिवैस्तज्ञ्रातृजं **भोजनामानं** राज्येऽभ्यपिच्यत ।

'विक्रमाद्वासरादष्टमुनिव्योमेन्दु(२१०७८)संमिते ।
वर्षे **मुञ्जपदे भोजभूपः** पट्टे निवेशितः ॥'

इति विक्रम १३६१=A. D. 1305 वत्सरे **मेरुतुङ्गाचार्येण** विरचिते **प्रबन्धचिन्तामणौ** श्रीमुञ्जराजप्रबन्धतश्च सुप्रसिद्धधारानगराधीशश्रीमद्भोजराजराजस्य श्रीमालवमण्डलान्तर्गतश्रीमदुज्जयिनीश्वरवाक्पतिराजापरपर्यायमुञ्जमहाराजः पितृव्य एवासीन्न पितामह इति सुदृढं निश्चीयतेतराम्.

अतो विविधलेखाद्यवगतश्रीमद्धारानगराधीशभोजराजपूर्वपुरुपवंशावली (Geneology) प्रकाश्यते—

---

१. 'सागरः परिखा लङ्का दुर्गो दुर्गपतिर्दशशिरा राजा ।
भाग्यक्षये तद्भग्नं **मुञ्ज** मा कुरु विपादम् ॥' इति च्छाया.

२. A. D. 1022.

| उदयपुरप्रशस्तितः | नवसाहसाङ्कचरिततः | नागपुरप्रशस्तितः | तिलकमञ्जरीतः | इण्डियन् आण्टिक्वेरी(६।५१-५४)पत्रतः |
|---|---|---|---|---|
| परमार | परमार | परमार | परमार | |
| उपेन्द्रराज | उपेन्द्रराज | | | कृष्णराज |
| वैरिसिंह I. | | | वैरिसिंह | वैरिसिंह |
| सीयक | | | | |
| वाक्पति I. | वाक्पति | | | |
| वैरिसिंह II.–वज्रट | वैरिसिंह | वैरिसिंह | | |
| हर्ष | सीयक–हर्ष | सीयक | श्रीहर्ष–सीयक | सीयकदेव |
| वाक्पति | वाक्पति–उत्पलराज | मुञ्ज | मुञ्ज–वाक्पति | वाक्पतिराज–अमोघवर्ष |
| सिन्धुराज | सिन्धुराज–नवसाहसाङ्क–कुमारनारायण | सिन्धुराज | सिन्धुराज | सिन्धुराज |
| भोजदेव | भोजदेव | भोजदेव | भोजदेव | भोजदेव |

किंच 'श्रीमद्भोजराजपितामहो मुञ्जराजमहाराजः' इत्यस्य प्रमाणीभूते Indian Antiquary Vol. VI., P. 53–54 लिखिते विक्रम १०७८=A. D. 1022 वर्षीये श्रीमद्भोजनरेन्द्रदानपत्रे, Epigraphia Indica Vol. III., P. 48–50 लिखिते विक्रम १११२=A. D. 1056 वर्षीये श्रीमज्जयसिंहवितीर्णदानपत्रे च 'श्रीवाक्पतिराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसिन्धुराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीभोजदेव–' इति यो लेख उपलभ्यते, तत्र तु श्रीमद्भोजदेवनरेन्द्रेण निजजनयितुः श्रीमन्मालवमण्डलान्तर्गतश्रीमदुज्जयिनीराजस्य श्रीमत्सिन्धुराजस्य नामन्यासश्चिरकालनामसंख्यातिसंकीर्तनार्थैव निवेशितो भवेत्. उत च तैलिङ्गाधिपतितैलिपराजराजहंसहिंस्रीरहंसकावंतंसालंकृतस्य निरलंकृतनिखिलशौर्यैकलापुञ्जस्य मञ्जुलमुञ्जराजमहाराजस्य कारावासनिवासानेहस्येकादशख्रिस्ताब्दशतकाद्यचरणे भ्रातृप्रतिनिधित्वेन श्रीमत्सिन्धुराजदेवस्तन्मण्डलमण्डको भवेत् इति कल्पना कथंचित्संभाव्यते. श्रीमदुज्जयिनीराजवाक्पतिराजापराभिधानश्रीमुञ्जराजमहाराजात् सिन्धुराजस्योत्पत्त्यसंभवात्, Epigraphia Indica Vol. II., P. 182–88 स्थ Dr. F. Kielhorn, Ph. D., C. I. E. महाशयप्रकाशितविक्रम ११६१=A. D. 1105 वर्षोत्कीर्णपरमारवंशावतंसश्रीनरवर्मदेवकारितमन्दिरप्रशस्तिलेखान्तर्गतैः, Epigraphia Indica Vol. I., P. 226–28 स्थ Dr. G. Bühler, Ph. D., L. L. D., C. I. E. महाशयप्रकाशितमालवमण्डलाधिपतिमहीपतिप्रशस्तिलेखान्तर्गतैः, श्रीमत्सिन्धुराजसमकालिकश्रीमत्परिमलकविविरचितनवसाहसाङ्कचरित–श्रीमद्धनपालकविविरचिततिलकमञ्जरीप्रस्तावनान्तर्गतैः, प्रबन्धचिन्तामणिस्थमुञ्जराजप्रबन्धान्तर्गतैश्च श्रीमद्वाक्पतिराजापरनाममुञ्जराजानुजसिन्धुराजदर्शिभिर्लेखैर्विरोधापाताच्च.

अथ च किलेतिहासादिषु भूयांसो वाक्पतिराजसमनामानो राजानोऽराजानो दरीदृश्यन्ते. तद्रहस्यमजानानैः कैश्चन पण्डितमण्डलीमण्डितैः पण्डितैः स्वमुद्रापितसुभाषितावलीभूमिकायां दशमख्रिस्तशतकोत्तरार्धोत्पन्नमुञ्जराजापरपर्यायवाक्पतिराजमहाराजस्य सप्तमख्रिस्तशतकोत्तरार्धोत्पन्नस्य राजतरङ्गिण्यां (४।१४५) वर्णितस्य कश्मीरमण्डलाधीशश्रीमल्ललितादित्यराजपराजितकन्यकुब्जमण्डलाधीशयशोवर्मयशोवर्ममहाराजस्य राजसभासिगौडवधाख्यमहाकाव्यप्रकाशिश्रीमत्कमलायुधान्तेवासिश्रीमद्वाक्पतिराजदेवस्य दशमख्रिस्ताब्दशतकोत्तरार्धोत्पन्नसोमदेवकविविरचितयशस्तिलकापरनामयशोधरमहाराजचरिते वर्णितस्य च नामसाम्यादेकता प्रकाशिता। अतस्तेषां धन्यवादपुरःसरं लेखं प्रकाशयामि—

---

1. *Vide* Archealogical Survey P. 124–129, Epigraphia Indica Vol. I., P. 140–147 and Vol. II., P. 119–125.

"VÂKPATI—Author of the Gaudavadha. He is stated in our book to have been the son of Harshadeva. For Vâkpatirâja's relations to Bhavabhûti, see Bhandarkar's Preface to his edition of Mâlatîmâdhava already referred to under Bhavabhûti. That Vâkpatirâja was a prince as well as a poet is evident both from the passage in the Râjatarangiṇî and from the following reference to him found in Halâyudha's commentary on the Piṅgala sûtras

'स जयति **वाक्पतिराजः** सकलार्थिमनोरथैककल्पतरुः ।
प्रत्यर्थिभूतपार्थिवलक्ष्मीहठहरणदुर्ललितः ॥'

Halâyudha's verse is quoted in the Das'arûpâvaloka with the note that the king referred to is Muñja.

According to a statement in the Yas'astilaka Vâkpatirâja was thrown into prison by Yas'ovarman, and there, like James I. of Scotland, composed his poem."

अथ च 'आदौ **धारा**राज्ये **सिन्धुल**संज्ञो राजा चिरं प्रजा पर्यपालयत् । तस्य वृद्धत्वे **भोज** इति पुत्रः समजनि । स यदा पञ्चवार्षिकस्तदा पिता ह्यात्मनो जरां ज्ञात्वा मुख्यामात्यानाहूय अनुजं **मुञ्जं** महाबलमालोक्य पुत्रं च बालं वीक्ष्य विचारयामास–' इति **मुञ्जराज**कथानकसूचक**भोजप्रबन्ध**ारम्भलेखकस्तु नीलं नभ इति लिखन्निव स्वनिर्मूलतां द्रढयति. **उज्जयिनी**श्वरत्वेन वर्णिता **भोजराज**पूर्वपुरुषा (Indian Antiquary Vol. XIV., P. 160 and Vol. VI., P. 51-52 स्थलेखैः, **प्रबन्धचिन्तामणि-नवसाहसाङ्कचरित**स्थश्लोकैश्चो**ज्जयिनी**श्वरः श्री**मुञ्जरापरनामवाक्पतिराज** आसीत्. अथ च **नवसाहसाङ्कचरित** ११७–५८ श्लोकैः, **प्रबन्धचिन्तामणि**स्थश्लोकैश्च **उज्जयिनी**राजः श्रीमत्**सिन्धुराज** आसीदिति) उपलभ्यन्ते. कथं तर्हि **उज्जयिनी**राजस्य श्रीमन्**मुञ्जराज**स्य श्रीमत्**सिन्धुराज**स्य वा **धारा**राज्ये राज्यकर्तृता पुनः संभाव्येत.

'**भोजराज** मया ज्ञातं राधावेधस्य कारणम् ।
**धाराया** विपरीतं हि न सहेत भवानिति ॥'

विद्वद्भिरिति श्लाघ्यमानो नवनगरनिवेशं कर्तुकामः पटहे वाद्यमाने **धारा**भिधया पणस्त्रिया**ग्निवेताल**नाम्ना पत्या सह **लङ्कां** गत्वा तं नगरनिवेशमालोक्य पुनः समागतया 'मन्नाम नगरे दातव्यम्' इत्यभिधाय तत्प्रतिच्छदपटं समर्प्य सा **धारां** नगरीं निवेशयामास–' इति **प्रबन्धचिन्तामणि**स्थ**भोजभीम**प्रबन्धान्तर्गतलेखतो **धारा**नगरी श्री**भोजदेवे**नैव निर्मापितेत्यवगम्यते. एवं **भोजराज**जनकः श्री**सिन्धुराजो**-

ऽपि श्रीमुञ्जराजस्यानुज एवासीत् (Epigraphia Indica, Vol. II, P. 182–88 स्थ Dr. F. Kielhorn, Ph. D., C. I. E. महाशयप्रकाशितविक्रम ११६१=A. D. 1105 वर्षोत्कीर्णपरमारवंशावतंसश्रीनरवर्मदेवकारितमन्दिरप्रशस्तिलेखतः, Epigraphia Indica, Vol. I., P. 226–228 स्थ Dr. G. Bühler, Ph. D., L. L. D., C. I E. महाशयप्रकाशितमालवमण्डलाधिपतिमहीपतिप्रशस्तिलेखतः, नवसाहसाङ्कचरित–तिलकमञ्जरीलेखतः, प्रबन्धचिन्तामणिस्थभोजभीमप्रबन्धान्तर्गतलेखतः) इत्यादिबहुविधलेखतः सुदृढं निश्चीयते. नहि सिन्धुराजस्यानुजो मुञ्जः कथमपि संभाव्यते. मुञ्जराजानुजत्वेन वर्णितेषु (Epigraphia Indica, Vol. II., P. 182–88 स्थ Dr. F. Kielhorn, Ph. D., C. I. E. महाशयप्रकाशितविक्रम ११६१=A. D. 1105 वर्षोत्कीर्णपरमारवंशावतंसश्रीनरवर्मदेवकारितमन्दिरप्रशस्तिलेखे, Epigraphia Indica, Vol. I., P. 226–228 स्थ Dr. G. Bühler, Ph. D., L. L. D., C. I. E. महाशयप्रकाशितमालवमण्डलाधिपतिमहीपतिप्रशस्तिलेखे, नवसाहसाङ्कचरित–तिलकमञ्जरीलेखे, प्रबन्धचिन्तामणिस्थभोजभीमप्रबन्धान्तर्गतमुञ्जप्रबन्धदर्शिलेखे च) इत्येवंविधेष्वनेकेषु लेखेषु भोजप्रबन्धकारस्य मुञ्जराजात्सिन्धुराजस्याभ्यर्हितत्वाद्राजधानीश्वरत्वाच्च पूर्वं वर्णनावसरप्रसङ्गः, मुञ्जराजानुजत्वेन वर्णितानां सिन्धुराजपराणां वाक्यवृन्दानामुच्छेदनावसरप्रसङ्गश्च स्यादित्यलं पल्लवितेन.

अस्य हि ग्रन्थस्य पुस्तकत्रयमस्मत्सरस्वतीसदनत उपलब्धम्. तदाधारेण शोधितमुद्रितेऽप्यस्मिन्ग्रन्थे टिप्पण्यां वा यत्र कुहचनाशुद्धिः स्थिता जाता वा भवेत्, तत्र सुहृदयहृदयाः संशोधयन्तु । यतः—

गच्छतः स्खलनं वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति प्रार्थयति—

भवदत्तशास्त्री.
(गव्हर्नमेण्ट कॉलेज, अजमेर.)

# सुभाषितरत्नसंदोहस्थविषयानुक्रमणिका ।


| | | पृष्ठे । |
|---|---|---|
| १ | सांसारिकविषयनिराकरणम्. | १ |
| २ | कोपनिराकरणम्. ... ... | ४ |
| ३ | मायाहंकारनिराकरणम्. ... | ८ |
| ४ | लोभनिराकरणम्. ... ... | ११ |
| ५ | इन्द्रियनिग्रहोपदेशः ... | १४ |
| ६ | स्त्रीगुणदोषविचारः... ... | १७ |
| ७ | सदसत्स्वरूपनिरूपणम् ... | २१ |
| ८ | ज्ञाननिरूपणम् ... ... | २५ |
| ९ | चारित्रनिरूपणम्... ... | २७ |
| १० | जातिनिरूपणम् ... ... | ३० |
| ११ | जरानिरूपणम् ... ... | ३४ |
| १२ | मृत्युनिरूपणम् ... ... | ३८ |
| १३ | सामान्यनित्यतानिरूपणम्... | ४२ |
| १४ | दैवनिरूपणम् ... ... | ४५ |
| १५ | जठरनिरूपणम् ... ... | ४८ |
| १६ | जीवसंबोधननिरूपणम् ... | ५० |
| १७ | दुर्जननिरूपणम् ... ... | ५४ |
| १८ | सज्जननिरूपणम् ... | ५८ |
| १९ | दाननिरूपणम्... ... | ६१ |
| २० | मद्यनिषेधनिरूपणम् ... | ६५ |
| २१ | मांसनिषेधनिरूपणम् ... | ६७ |
| २२ | मधुनिषेधनिरूपणम् ... | ६९ |
| २३ | कामनिषेधनिरूपणम् ... | ७१ |
| २४ | वेश्यासङ्गनिषेधनिरूपणम् | ७३ |
| २५ | द्यूतनिषेधनिरूपणम् ... | ७५ |
| २६ | आप्तविवेचनम् ... ... | ७६ |
| २७ | गुरुस्वरूपनिरूपणम् ... | ८० |
| २८ | धर्मनिरूपणम् ... ... | ८२ |
| २९ | शोकनिरूपणम्... ... | ८५ |
| ३० | शौचनिरूपणम् ... ... | ८७ |
| ३१ | श्रावकधर्मनिरूपणम् ... | ९१ |
| ३२ | द्वादशविधतपश्चरणनिरूपणम् | १०० |
| ३३ | ग्रन्थकर्तृप्रशस्तिः... ... | १०३ |
| ३४ | ग्रन्थसमाप्तिः ... ... | १०४ |

# काव्यमाला ।

## अमितगतिविरचितः

# सुभाषितरत्नसंदोहः ।

जनयति मुदमन्तर्भव्य[1]पाथोरुहाणां
हरति तिमिरराशिं या प्रभा भानवीव ।
[2]कृतनिखिलपदार्थद्योतना भारतीद्धा[3]
वितरतु धुतदोषा सार्हती [4]भारती वः ॥ १ ॥

न तदरिरिभराजः केशरी केतुरुग्रो
नरपतिरतिरुष्टः कालकूटोऽतिरौद्रः ।
अतिकुपितकृतान्तः पावकः पन्नगेन्द्रो
यदिह विषयशत्रुर्दुःखमुग्रं करोति ॥ २ ॥

न नरदिविजनाथा ये[5]षु तृप्यन्ति तेषु
कथमपरनराणामिन्द्रियार्थेषु तृप्तिः ।
वहति सरिति यस्यां दन्तिनाथोऽतिमत्तो
भवति हि शशकानां केन तत्र व्यवस्था ॥ ३ ॥

ददति विषयदोषा ये तु दुःखं सुराणां
कथमि[6]तरमनुष्यास्तेषु सौख्यं [7]लभन्ते ।
मदमलिनकपोलः क्लिश्यते ये[8]न हस्ती
[9]क्रमपतितमृगं स [10]त्यक्ष्यती[11]भारिरत्र ॥ ४ ॥

यदि भवति समुद्रः [12]सिन्धुतोयेन तृप्तो
यदि कथमपि वह्निः काष्ठसंघाततश्च ।

---

१. भव्या एव पाथोरुहाणि कमलानि तेषाम्. २. कृतं निखिलपदार्थानां द्योतनं यया सा. ३. वृद्धिं प्राप्ता. ४. वाणी. ५. विषयेषु. ६. सामान्यपुरुषाः. ७. अपि तु न लभन्ते. ८. सिंहेन. ९. चरणपतितमृगम्. १०. किं त्यक्ष्यति, अपि च न त्यक्ष्यतीत्यर्थः. ११. सिंहः. १२. सरिज्जलेन.

अयमपि विषयेषु प्राणिवर्गस्तदा स्या-
दिति मनसि विदन्तो मा व्यधुस्तेषु यत्नम् ॥ ५ ॥
असुरसुरनराणां यो न भोगेषु तृप्तः
कथमपि मनुजानां तस्य भोगेषु तृप्तिः ।
जलनिधिजलपाने यो[1] न जातो वितृष्ण-
स्तृणशिखरगताम्भःपानतः किं स तृप्येत् ॥ ६ ॥
सततविविधजीवध्वंसनाद्यैरुपायैः
स्वजनतनुनिमित्तं कुर्वते पापमुग्रम् ।
व्यथिततनुमनस्का जन्तवोऽमी सहन्ते
नरकगतिमुपेता दुःखमेकाकिनस्ते ॥ ७ ॥
यदि भवति विचित्रं संचितं द्रव्यमर्थ्यं
परिजनसुतदारा भुञ्जते तन्मिलित्वा ।
न पुनरिह समर्था ध्वंसितुं दुःखमेत-
त्तदपि बत विधत्ते पापमङ्गी तदर्थम् ॥ ८ ॥
धनपरिजनभार्याभ्रातृमित्रादिमध्ये
व्रजति[2] भवभृता यो नैष एकोऽपि कश्चित् ।
तदपि गतविमर्षाः कुर्वते तेषु रागं
न तु विदधति धर्मं यः समं याति यात्रा[3] ॥ ९ ॥
यदिह भवति सौख्यं [4]वीतकामस्पृहाणां
न तदमरविभूनां नापि चक्रेश्वराणाम् ।
इति मनसि नितान्तं प्रीतिमाधाय धर्मे
भजत जहित चैतान्कामशत्रून्दुरन्तान् ॥ १० ॥
यदि कथमपि नश्येद्भोगलेशेन नृत्वं
पुनरपि तदवाप्तिर्दुःखतो देहिनां स्यात् ।
इति हतविषयाशा धर्मकृत्ये यतध्वं
यदि भवमृतिमुक्ते मुक्तिसौख्येऽस्ति वाञ्छा ॥ ११ ॥

१. यः कश्चन. २. जीवेन सह. ३. गन्त्रा. ४. जन्ममरणरहिते.

विषमविषसमानान्नाशिनः कामभोगां-
स्त्यजति यदि मनुष्यो दीर्घसंसारहेतून् ।
व्रजति कथमनन्तं दुःखमत्यन्तघोरं
त्रिविधमुपहतात्मा श्वभ्रभूम्यादिभूतम् ॥ १२ ॥
विगलितरसमस्थि स्वादयन्दारितास्यः
स्वकवदनजरक्ते मन्यते श्वा सुखित्वम् ।
स्वतनुजनितखेदाज्जायमानं जनानां
तदुपममिह सौख्यं कामिनां कामिनीभ्यः ॥ १३ ॥
किमिह परमसौख्यं निःस्पृहत्वं यदेत-
त्किमथ परमदुःखं सस्पृहत्वं यदेतत् ।
इति मनसि विधाय त्यक्तसङ्गाः सदा ये
विदधति जिनधर्मं ते नराः पुण्यवन्तः ॥ १४ ॥
[1]उपधिवसतिपिण्डान्गृह्णते नो विरुद्धां-
स्तनुवचनमनोभिः सर्वथा ये मुनीन्द्राः ।
व्रतसमितिसमेता ध्वस्तमोहप्रपञ्चा
ददतु मम विमुक्तिं ते हतक्रोधयोधाः ॥ १५ ॥
जनयति परभूतिं स्त्रीधनं नाशदुःखं
ददति विषयवाञ्छा बन्धनं बन्धुवर्गाः ।
इति रिपुषु विमूढास्तन्वते सौख्यबुद्धिं
जगति धिगिति कष्टं मोहनीयं जनानाम् ॥ १६ ॥
मदमदनकषायारातयो नोपशान्ता
न च विषयविमुक्तिर्जन्मदुःखान्न भीतिः ।
न तनुसुखविरागो विद्यते यस्य जन्तो-
र्भवति जगति दीक्षा तस्य भुक्त्यै न मुक्त्यै ॥ १७ ॥
श्रुतमतिबलवीर्यप्रेमरूपायुरङ्ग-
स्वजनतनयकान्ताभ्रातृपित्रादि सर्वम् ।

---

१. ज्ञानसंयमशौचोपकरणस्थानान्.

तितउगतजलं वा न स्थिरं वीक्षतेऽङ्गी
तदपि बत विमूढो नात्मकृत्यं करोति ॥ १८ ॥
त्यजत युवतिसौख्यं क्षान्तिसौख्यं श्रयध्वं
विरमत भवमार्गान्मुक्तिमार्गे रमध्वम् ।
जहित विषयसङ्गं ज्ञानसङ्गं कुरुध्वं
अमितगतिनिवासं येन नित्यं लभध्वम् ॥ १९ ॥
श्रुतिसहजविवेकं ज्ञानसंसर्गदीपा-
स्तिमिरदलनदक्षाः सर्वदात्यन्तदीप्ताः ।
प्रकटितनयमार्गा यस्य पुंसोऽत्र सन्ति
स्खलति यदि स मार्गे तत्र दैवापराधः ॥ २० ॥
जिनपतिपदभक्तिर्भावना जैनतत्त्वे
विषयसुखविरक्तिर्मित्रता सत्त्ववर्गे ।
श्रुतिशमयमशक्तिर्मूकतान्यस्य दोषे
मम भवतु च बोधिर्यावदाप्नोमि मुक्तिम् ॥ २१ ॥

इति सांसारिकविषयनिराकरणम् ॥ १ ॥

कोपोऽस्ति यस्य मनुजस्य निमित्तमुक्तो
नो तस्य कोऽपि कुरुते गुणिनोऽपि भक्तिम् ।
आशीविषं भजति को ननु दन्दशूकं
नानोग्ररोगशमिना मणिनापि युक्तम् ॥ २२ ॥
पुण्यं चितं व्रततपोनियमोपवासैः
क्रोधः क्षणेन दहतीन्धनवद्धुताशः ।
मत्वेति तस्य वशमेति न यो महात्मा
तस्याभिवृद्धिमुपयाति नरस्य पुण्यम् ॥ २३ ॥
दोषं न तं नृपतयो रिपवोऽपि रुष्टाः
कुर्वन्ति केशरिकरीन्द्रमहोरगा वा ।

---

१. इवार्थे वाशब्दः. २. हानिम्.

धर्मं निहत्य भवकाननदाववह्निं
यं [1]दोषमत्र विदधाति नरस्य रोषः ॥ २४ ॥

यः कारणेन वितनोति रुषं मनुष्यः
कोपं प्रयाति शमनं तद[3]भावतोऽस्य ।
यस्तत्र कुप्यति विनापि निमित्तमङ्गी
नो तस्य कोऽपि शमनं विदधातुमीशः ॥ २५ ॥

धैर्यं धुनाति विधुनोति मतिं क्षणेन
रागं करोति शिथिलीकुरुते शरीरम् ।
धर्मं हिनस्ति वचनं विदधात्यवाच्यं
कोपो ग्रहो रतिपतिर्मदिरामदश्च ॥ २६ ॥

रागं दृशोर्वपुषि कम्पमनेकरूपं
चित्तं विवेकरहितानि च चिन्तितानि ।
पुंसाममार्गगमनं समदुःखजातं
कोपः करोति सहसा मदिरामदश्च ॥ २७ ॥

मैत्रीयशोव्रततपोनियमानुकम्पा-
सौभाग्यभाग्यपठनेन्द्रियनिर्जयाद्याः ।
नश्यन्ति कोपपरवैरिहताः समस्ता-
स्तीव्राग्नितप्तरसवत्क्षणतो नरस्य ॥ २८ ॥

मासोपवासनिरतोऽस्तु तनोतु सत्यं
ध्यानं करोतु विदधातु बहिर्निवासम् ।
ब्रह्मव्रतं धरतु भैक्ष्यरतोऽस्तु नित्यं
रोषं करोति यदि सर्वमनर्थकं तत् ॥ २९ ॥

आत्मानमन्यमथ हन्ति जहाति धर्मं
पापं समाचरति युक्तमपाकरोति ।

---

१. हानिम्. २. संसारे. ३. कारणाभावतः. ४. हठात्मकं रागम्. ५. रक्तताम्. ६. पारदवत्.

पूज्यं न पूजयति वक्ति विनिन्द्यवाक्यं
किं किं करोति न नरः खलु कोपयुक्तः ॥ ३० ॥
दोषेषु सत्सु यदि कोऽपि ददाति शापं
सत्यं ब्रवीत्ययमिति प्रविचिन्त्य सह्यम् ।
दोषेष्वसत्सु यदि कोऽपि ददाति शापं
मिथ्यां ब्रवीत्ययमिति प्रविचिन्त्य सह्यम् ॥ ३१ ॥
कोपेन कोऽपि यदि ताडयतेऽथ हन्ति
पूर्वं मयास्य कृतमेतदनर्थबुद्ध्या ।
दोषो ममैव पुनरस्य न कोऽपि दोषो
ध्यात्वेति तत्र मनसा सहनीयमस्य ॥ ३२ ॥
व्याध्यादिदोषपरिपूर्णमनिष्टसङ्गं
पूतीदमङ्गमपनीय विवर्ध्य धर्मम् ।
शुद्धं ददाति गतबाधमनल्पसौख्यं
लाभो ममायमिति घातकृतो विषह्यम् ॥ ३३ ॥
धर्मे स्थितस्य यदि कोऽपि करोति कष्टं
पापं चिनोति गतबुद्धिरयं वराकः ।
एवं विचिन्त्य परिकल्पकृतं त्वमुष्य
ज्ञानान्वितेन भवति क्षमितव्यमत्र ॥ ३४ ॥
शप्तोऽस्म्यनेन न हतोऽस्मि नरेण रोषा-
न्नो मारितोऽस्मि मरणेऽपि न धर्मनाशः ।
कोपस्तु धर्ममपहन्ति चिनोति पापं
संचिन्त्य चारुमतिनेति तितिक्षणीयम् ॥ ३५ ॥
दुःखार्जितं खलगतं वैलभीकृतं च
धान्यं यथा दहति वह्निकणः प्रविष्टः ।
नानाविधव्रतदयानियमोपवासै-
रोषोऽर्जितं भवभृतां पुरुपुण्यराशिम् ॥ ३६ ॥

१.–२. दुर्वचनम्. ३. राशीकृतम्.

कोपेन यः परमभीप्सति हन्तुमज्ञो
नाशं स एव लभते शरभो ध्वनन्तम् ।
मेघं लिलङ्घिषुरिवान्यजनो न किंचि-
च्छक्नोति कर्तुमिति कोपवता न भाव्यम् ॥ ३७ ॥

कोपः करोति पितृमातृसुहृज्जनाना-
मप्यप्रियत्वमुपकारिजनापकारम् ।
देहक्षयं प्रकृतकार्यविनाशनं च
मत्वेति कोपवशिनो न भवन्ति भव्याः ॥ ३८ ॥

तीर्थाभिषेकजपहोमदयोपवासा
ध्यानव्रताध्ययनसंयमदानपूजा ।
नेदृक्फलं जगति देहवतां ददन्ते
यादृग्दमो निखिलकालहितो ददाति ॥ ३९ ॥

भ्रूभङ्गभङ्गुरमुखो विकरालरूपो
रक्तेक्षणो दशनपीडितदन्तवासाः ।
त्रासं गतोऽतिमनुजो जननिन्द्यवेषः
क्रोधेन कम्पिततनुर्भुवि राक्षसो वा ॥ ४० ॥

कोऽपीह लोहमिति तप्तमुपाददानो
दंदह्यते निजकरे परदाहमिच्छुः ।
यद्वत्तथा प्रकुपितः परमाजिघांसु-
र्दुःखं स्वयं व्रजति वैरिवधे विकल्पः ॥ ४१ ॥

वैरं विवर्धयति सख्यमपाकरोति
रूपं विरूपयति निन्द्यमतिं तनोति ।
दौर्भाग्यमानयति शातयते च कीर्तिं
रोषोऽत्र रोषसदृशो न हि शत्रुरस्ति ॥ ४२ ॥

इति कोपनिराकरणोपदेशः ॥ २ ॥

१. अष्टापदो महासिंहः.

रूपेश्वरत्वकुलजातितपोबलाज्ञा-
ज्ञानाष्टदुःसहमदाकुलबुद्धिरज्ञः ।
यो मन्यतेऽहमिति नास्ति परोऽधिकोऽपि
मानात्स नीचकुलमेति भवाननेकान् ॥ ४३ ॥
नीतिं निरस्यति विनीतिमुपाकरोति
कीर्तिं शशाङ्कधवलां मलिनीकरोति ।
मान्यान्न मानयति मानवशेन हीनः
प्राणीति मानमपहन्ति महानुभावः ॥ ४४ ॥
हीनाधिकेषु विदधात्यविवेकभावं
धर्मं विनाशयति संचिनुते च पापम् ।
दौर्भाग्यमानयति कार्यमपाकरोति
किं किं न दोषमथवा कुरुतेऽभिमानः ॥ ४५ ॥
माने कृते यदि भवेदिह कोऽपि लाभो
यद्यर्थहानिरथ काचन मार्दवे स्यात् ।
ब्रूयाच्च कोऽपि यदि मानकृतं विशिष्टं
मानो भवेद्भवभृतां सफलस्तदानीम् ॥ ४६ ॥
मानी विनीतिमपहन्त्यविनीतिरङ्गी[1]
सर्वं निहन्ति गुणमस्तगुणानुरागः ।
सर्वापदां जगति धाम विरागतः स्या-
दित्याकलय्य सुधियो न धरन्ति मानम् ॥ ४७ ॥
हीनोऽयमन्यजननोपहताभिमाना-
ज्ज्ञातोऽहमुत्तमगुणस्तदकारकत्वात् ।
अन्यं निहीनमवलोकयतोऽपि पुंसो
मानो विनश्यति सदेति वितर्कभाजः ॥ ४८ ॥
गर्वेण मातृपितृबान्धवमित्रवर्गाः
सर्वे भवन्ति विमुखा विहितेन[2] पुंसः ।

---

१. अविनीतिं रञ्जयति. २. मानकृतेन.

अन्योऽपि तस्य तनुते न जनोऽनुरागं
मत्वेति मानमपहस्तयते सुबुद्धिः ॥ ४९ ॥
आयासकोपभयदुःखमुपैति मर्त्यो
मानेन सर्वजननिन्दितवेषरूपः ।
विद्यादयादमयमादिगुणांश्च हन्ति
ज्ञात्वेति गर्ववशमेति न शुद्धबुद्धिः ॥ ५० ॥
स्तब्धो विनाशमुपयाति नतोऽतिवृद्धिं
मर्त्यो नदीतटगतो धरणीरुहो वा[1] ।
गर्वस्य दोषमिति चेतसि संनिधाय
नाहं करोति गुणदोषविचारदक्षः ॥ ५१ ॥
हीनानवेक्ष्य कुरुते हृदयेऽभिमानं
मूर्खः स्वतोऽधिकगुणानवलोक्य मर्त्यान् ।
प्राज्ञः परित्यजति गर्वमतीव लोके
सिद्धान्तशुद्धधिषणा मुनयो वदन्ति ॥ ५२ ॥
जिह्वासहस्रकलितोऽपि समा सहस्रै-
र्यस्यां न दुःखमुपवर्णयितुं समर्थः ।
सर्वज्ञदेवमपहाय परो मनुष्य-
स्तां श्वभ्रभूमिमुपयाति नरोऽभिमानी ॥ ५३ ॥
यां छेदभेददमनाङ्कनदाहदोह-
वातातपान्नजलरोधवधादिदोषाम् ।
मायावशेन मनुजो जननिन्दनीयां
तिर्यग्गतिं व्रजति तामतिदुःखपूर्णाम् ॥ ५४ ॥
यत्र प्रियाप्रियवियोगसमागमान्य
प्रेष्यत्वधान्यधनबान्धवहीनताद्यैः ।
दुःखं प्रयाति विविधं मनसाप्यसह्यं
तं मर्त्यवासमधितिष्ठति माययाङ्गी ॥ ५५ ॥

---

१. इवार्थे वाशब्दः.

यत्रावलोक्य दिवि दीनमना विभूति-
मन्यामरेष्वधिककान्तिसुखादिकेषु ।
प्राप्याभियोगपदवीं लभतेऽतिदुःखं
तत्रेति वञ्चनपरः पुरुषो निवासम् ॥ ५६ ॥

जामातृभर्तृपितृबान्धवमित्रपुत्र-
वस्त्रासनाभरणमण्डनसौख्यहीनः ।
दीनाननो मलिननिन्दितवेषरूपो
नारीषु तासु भवमेति नरो निकृत्या[1] ॥ ५७ ॥

शीलव्रतोद्यमतपःशमसंयुतोऽपि
नात्राश्नुते निकृतिशल्यधरो मनुष्यः ।
आत्यन्तिकीं श्रियमबाधसुखस्वरूपां
शल्यान्वितो विविधधान्यधनेश्वरो वा[2] ॥ ५८ ॥

क्लेशार्जितं सुखकरं रमणीयमर्थ्यं
धान्यं कृषीवलजनस्य शिखीव सर्वम् ।
भस्मीकरोति बहुधापि जनस्य सत्यं
मायाशिखी प्रचुरदोषकरः क्षणेन ॥ ५९ ॥

विद्वेषवैरिकलहासुखघातभीति-
निर्भर्त्सनाभिभवनासुविनाशनादीन् ।
दोषाननुपैति निखिलान्मनुजोऽतिमायी
बुद्धेति चारुमतयो न भजन्ति मायाम् ॥ ६० ॥

या[3] प्रत्ययं[4] बुधजनेषु निराकरोति
पुण्यं हिनस्ति परिवर्धयते च पापम् ।
सत्यं निरस्यति तनोति विनिन्द्यभावं
तां सेवते निकृतिमत्र जनो न भव्यः ॥ ६१ ॥

प्रच्छादितोऽपि कपटेन जनेन दोषो
लोके प्रकाशमुपयातितरां क्षणेन ।

१. मायया. २. इवार्थे वाशब्दः. ३. माया. ४. विश्वासम्.

वर्चो[1] यथा जलगतं विदधाति पुंसां
माया मनागपि न चेतसि संनिधेया ॥ ६२ ॥

इति मायाहंकारनिराकरणोपदेशः ॥ ३ ॥

शीतो रविर्भवति शीतरुचिः प्रतापी
स्तब्धं नभो जलनिधिः सरिदम्बुतृप्तः ।
स्थायी मरुद्विदहनो दहनोऽपि जातु
लोभानलस्तु न कदाचिददाहकः स्यात् ॥ ६३ ॥

लब्धेन्धनज्वलनवत्क्षणतोऽतिवृद्धिं
लाभेन लोभदहनः समुपैति जन्तोः ।
विद्यागमव्रततपःशमसंयमादी-
न्भसीकरोति यमिनां स पुनः प्रवृद्धः ॥ ६४ ॥

वित्ताशया खनति भूमितलं सतृष्णो
धातून्गिरेर्धमति धावति भूमिपाग्रे ।
देशान्तराणि विविधानि विगाहते च
पुण्यं विना न च नरो लभते स तृप्तिम् ॥ ६५ ॥

वर्धस्व जीव जय नन्द विभो चिरं त्व-
मित्यादिचाटुवचनानि विभाषमाणः ।
दीनाननो मलिननिन्दितरूपधारी
लोभाकुलो वितनुते सधनस्य सेवाम् ॥ ६६ ॥

चक्षुःक्षयं प्रचुररोगशरीरबाधा-
स्वान्ताविघातगतिभङ्गममन्यमानः ।
संस्कृत्य पत्रनिचयं च मषीर्विमर्द्य
तृष्णातुरो लिखति लेखकतामुपेतः ॥ ६७ ॥

विश्वंभरां विविधजन्तुगणेन पूर्णां
स्त्री गर्भिणीमिव कृपामपहाय मर्त्यः ।

---

१. गूथो यथा.

नानाविधोपकरणेन हलेन दीनो
लोभार्दितः कृषति पापमलोकमानः ॥ ६८ ॥
भोगोपभोगसुखतो विमुखो मनुष्यो
रात्रिं दिवं पठनचिन्तनसक्तचित्तः ।
शास्त्राण्यधीत्य विविधानि करोति लोभा-
दध्यापनं शिशुगणस्य विवेकशून्यः ॥ ६९ ॥
वस्त्राणि सीव्यति तनोति विचित्रचित्रं
मृत्काष्ठलोहकनकादिविधिं करोति ।
नृत्यं चिनोति रजकत्वमुपैति मर्त्यः
किं किं न लोभवशवर्तितया विधत्ते ॥ ७० ॥
लोकस्य मुग्धधिषणस्य विवञ्चनानि
कुर्वन्नरो विविधमानविशेषकृत्या[1] ।
संसारसागरमपारमवीक्षमाणो
वाणिज्यमत्र विदधाति विवृद्धलोभः ॥ ७१ ॥
अध्येति नृत्यति लुनाति मिनोति नौति
क्रीणन्ति हन्ति वपते चिनुते बिभेति ।
मुष्णाति गायति धिनोति बिभर्ति भिन्ते
लोभेन सीव्यति पणायति याचते च ॥ ७२ ॥
कुन्तासिशक्तिभरतोमरतज्वलादि
नानाविधायुधभयंकरमुग्रयोधम् ।
संग्राममध्यमधितिष्ठति लोभयुक्तः
स्वं जीवितं तृणसमं विगणय्य जीवः ॥ ७३ ॥
अत्यन्तभीमवनजीवगणेन पूर्णं
दुर्गं वनं भवभृतां मनसाप्यगम्यम् ।
चौराकुलं विशति लोभवशेन मर्त्यो
नो धर्मकर्म विदधाति कदाचिदज्ञः ॥ ७४ ॥

१. तोलने न्यूनाधिकीकरणेन,

जीवान्निहन्ति विविधं वितथं ब्रवीति
स्तेयं तनोति भजते वनितां परस्य।
गृह्णाति दुःखजननं धनमुग्रदोषं
लोभग्रहस्य वशवर्तितया मनुष्यः॥ ७५ ॥

उद्यन्महानिलवशोत्थविचित्रवीचि-
विक्षिप्तनक्रमकरादिनितान्तभीतिम्।
अम्भोधिमध्यमुपयाति विवृद्धवेलं
लोभाकुलो मरणदोषममन्यमानः॥ ७६ ॥

निःशेषलोकवनदाहविधौ समर्थं
लाभानलं निखिलतापकरं ज्वलन्तम्।
ज्ञानाम्बुवाहजनितेन विवेकिजीवाः
संतोषदिव्यसलिलेन शमं नयन्ते॥ ७७ ॥

द्रव्याणि पुण्यरहितस्य न सन्ति लोभा-
त्सन्त्यस्य चेन्न तु भवन्त्यचलानि तानि।
सन्ति स्थिराणि यदि तस्य न सौख्यदानि
ध्यात्वेति शुद्धधिषणो न तनोति लोभम्॥ ७८ ॥

चक्रेशकेशवहलायुधभूतितोऽपि
संतोषमुक्तमनुजस्य न तृप्तिरस्ति।
तृप्तिं विना न सुखमित्यवगम्य सम्य-
ग्लोभग्रहस्य वशिनो न भवन्ति धीराः॥ ७९ ॥

दुःखानि यानि नरकेष्वतिदुःसहानि
तिर्यक्षु यानि मनुजेष्वमरेषु यानि।
सर्वाणि तानि मनुजस्य भवन्ति लोभा-
दित्याकलय्य विनिहन्ति तमत्र धन्यः॥ ८० ॥

लोभं विधाय विधिना बहुधापि पुंसः
संचिन्वतः क्षयमनित्यतया प्रयान्ति।

द्रव्याण्यवश्यमिति चेतसि संनिरूप्य
लोभं त्यजन्ति सुधियो धुतमोहनीयाः ॥ ८१ ॥
तिष्ठन्तु बाह्यधनधान्यपुरःसरार्थाः
संवर्धिताः प्रचुरलोभवशेन पुंसा ।
कायोऽपि नश्यति निजोऽयमिति प्रचिन्त्य
लोभारिमुग्रमुपहन्ति विरुद्धतत्त्वम् ॥ ८२ ॥

इति लोभनिराकरणोपदेशः ॥ ४ ॥

स्वेच्छा विहारसुखतो निवसन्नगानां
भक्षद्वने किशलयानि मनोहराणि ।
आरोहणाङ्कुशविनोदनबन्धनादि
दन्ती त्वगिन्द्रियवशः समुपैति दुःखम् ॥ ८३ ॥
तिष्ठञ्जलेऽतिविमले विपुले यथेच्छं
सौख्येन भीतिरहितो रममाणचित्तः ।
गृद्धो रसेषु रसनेन्द्रियतोऽतिकष्टं
निष्कारणं मरणमेति षडीक्षणोऽत्र ॥ ८४ ॥
नानातरुप्रसवसौरभवासिताङ्गो
घ्राणेन्द्रियेण मधुपो यमराजधिष्ण्याम् ।
गच्छत्यशुद्धमतिरत्र गतो विशंक्ति
गन्धेषु पद्मसदनं समवाप्य दीनः ॥ ८५ ॥
सज्जातिपुष्पकलिकेयमितीव मत्वा
दीपार्चिषं हतमतिः शलभः पतित्वा ।
रूपावलोकनमना रमणीयरूपे
मुग्धोऽवलोकनवशेन यमास्यमेति ॥ ८६ ॥
दूर्वाङ्कुराशनसमृद्धवपुः कुरङ्गः
क्रीडन्वनेषु हरिणीभिरसौ विलासैः ।
अत्यन्तगेयरवदत्तमना वराकः
श्रोत्रेन्द्रियेण समवर्तिमुखं प्रयाति ॥ ८७ ॥

एकैकमक्षविषयं भजताममीषां
संपद्यते यदि कृतान्तगृहातिथित्वम् ।
पञ्चाक्षगोचररतस्य[1] किमस्ति वाच्य-
मक्षार्थमित्यमलधीरधियस्त्यजन्ति ॥ ८८ ॥

दन्तीन्द्रदन्तदलनैकविधौ समर्थाः
सन्त्यत्र रौद्रमृगराजवधे प्रवीणाः ।
आशीविषोरगवशीकरणेऽपि दक्षाः
पञ्चाक्षनिर्जयपरास्तु न सन्ति मर्त्याः ॥ ८९ ॥

संसारसागरनिरूपणदत्तचित्ताः
सन्तो वदन्ति मधुरां विषयोपसेवाम् ।
आदौ विपाकसमये कटुकां नितान्तं
किंपाकपाकफलभुक्तिमिवाङ्गभाजाम् ॥ ९० ॥

तावन्नरो भवति तत्त्वविदस्तदोषो
मानी मनोरमगुणो मननीयवाक्यः ।
शूरः समस्तजनतामहितः कुलीनो
यावद्धृषीकविषयेषु न शक्तिमेति ॥ ९१ ॥

मर्त्यं हृषीकविषया यदमी त्यजन्ति
नाश्चर्यमेतदिह किंचिदनित्यतातः ।
एतत्तु चित्रमनिशं यदमीषु मूढो
मुक्तोऽपि मुञ्चति मतिं न विवेकशून्यः ॥ ९२ ॥

आदित्यचन्द्रहरिशंकरवासवाद्याः
शक्ता न जेतुमतिदुःखकराणि यानि ।
तानीन्द्रियाणि वलवन्ति सुदुर्जयानि
ये निर्जयन्ति भुवने वलिनस्त एके ॥ ९३ ॥

सौख्यं यदत्र विजितेन्द्रियशत्रुदर्पः
प्राप्नोति पापरहितं विगतान्तरायम् ।

---

१. जीवस्य.

स्वस्थं तदात्मकमनात्मधिया विलभ्यं
किं तद्दुरन्तविषयानलतप्तचित्तः ॥ ९४ ॥
नानाविधव्यसनधूलिविभूतिवातं
तत्त्वं विविक्तमवगम्य जिनेशिनोक्तम्।
यः सेवते विषयसौख्यमसौ विमुच्य
हस्तेऽमृतं पिबति रौद्रविषं निहीनः ॥ ९५ ॥
दासत्वमेति वितनोति विहीनसेवां
धर्मं धुनाति विदधाति विनिन्द्यकर्म।
रेफश्चिनोति कुरुतेऽतिविरूपवेषं
किं वा हृषीकवसतस्तनुते न मर्त्यः ॥ ९६ ॥
अब्धिर्न तृप्यति यथा सरितां सहस्रै-
र्नोचेन्धनैरिव शिखी वहुधोपनीतैः।
जीवः समस्तविषयैरपि तद्वदेव
संचिन्त्य चारुधिषणस्त्यजतीन्द्रियार्थान् ॥ ९७ ॥
आपातमात्ररमणीयमतृप्तिहेतुं
किंपाकपाकफलतुल्यमथो विपाके।
नो शाश्वतं प्रचुरदोपकरं विदित्वा
पञ्चेन्द्रियार्थसुखमर्थधियस्त्यजन्ति ॥ ९८ ॥
विद्या दया द्युतिरनुद्धतता तितिक्षा
सत्यं तपो नियमनं विनयो विवेकः।
सर्वे भवन्ति विपयेपु रतस्य मोघा(?)
मत्वेति चारुमतिरेति न तद्वशित्वम् ॥ ९९ ॥
लोकार्चितोऽपि कुलजोऽपि वहुश्रुतोऽपि
धर्मस्थितोऽपि विरतोऽपि शमान्वितोऽपि।
अक्षार्थपन्नगविपाकुलितो मनुष्य-
स्तन्नास्ति कर्म करुते न यदत्र निन्द्यम् ॥ १०० ॥

१. पापम्.

लोकार्चितं गुरुजनं पितरं सवित्रीं
बन्धुं सनाभिमबलां सुहृदं स्वसारम् ।
भृत्यं प्रभुं तनयमन्यजनं च मर्त्यो
नो मन्यते विषयवैरिवशः कदाचित् ॥ १०१ ॥

येनेन्द्रियाणि विजितान्यतिदुर्धराणि
तस्याविभूतिरिह नास्ति कुतोऽपि लोके ।
श्लाघ्यं च जीवितमनर्थविमुक्तमुक्तं
पुंसो विविक्तमतिपूजिततत्त्वबोधैः ॥ १०२ ॥

इतीन्द्रियनिग्रहोपदेशः ॥ ५ ॥

उद्यद्गन्धप्रबन्धां परमसुखरसां कोकिलालापजल्पां
पुष्पस्रक्सौकुमार्यां कुसुमशरवधूं रूपतो निर्जयन्तीम् ।
सौख्यं सर्वेन्द्रियाणामभिमतमभितः कुर्वतीं मानसेष्टं
सत्सौभाग्या लभन्ते कृतसुकृतवशाः कामिनीं मर्त्यमुख्याम् ॥ १०३ ॥

अक्ष्णोर्युग्मं विलोकान्मृदुतनुगुणतस्तर्पयन्ती शरीरं,
दिव्यामोदेन वक्रादपगतमरुता नासिकां, चारुवाचा ।
श्रोत्रद्वन्द्वं, मनोज्ञा दशनमपि रसा तर्पयन्ती मुखाब्जं
यद्वत्पञ्चाक्षसौख्यं वितरति युवतिः कामिनां नान्यदेवम् ॥ १०४ ॥

या कूर्मोच्चाङ्घ्रिपृष्टारुणचरणतला वृत्तजङ्घा वरोरूः
स्थूलश्रोणीनितम्बा प्रविपुलजघना दक्षिणावर्तनाभिः ।
इन्द्रालक्षामध्या कनकपुटकुचा वारिजावर्तकण्ठा
पुष्पस्रग्बाहुयुग्मा शशधरवदना पक्वबिम्बाधरोष्ठी ॥ १०५ ॥

संशुम्भत्पाण्डुगण्डा, प्रचकितहरिणीलोचना, कीरनासा,
सज्येष्वासानतभ्रूः, सुरभिकचचया, त्यक्तपद्मेव पद्मा ।
अङ्गैरङ्गं भजन्ती धृतमदनमदैः प्रेमतो वीक्ष्यमाणा
नेदृग्यस्यास्ति योषा स किमु वरतपो भक्तितो नो विधत्ते ॥ १०६ ॥

---

१. कम्बुकण्ठी.

संत्यक्तव्यक्तबोधस्तरुरपि बकुलो मद्यगण्डूषसिक्तः
पिण्डीवृक्षश्च[1] मुञ्चंश्चरणतलहतः पुष्परोमाञ्चमर्च्यम् ।
सौख्यं जानाति यस्याकृतमदनपतेर्हावभावास्पदाया-
स्तां नारीं वर्जयन्तो विदधति तरुतोऽप्यूनमात्मानमज्ञाः ॥ १०७ ॥
गौरीं देहार्धमीशो हरिरपि कमलां नीतवानत्र वक्षो
यत्सङ्गात्सौख्यमिच्छुः[2] सरसिजनिलयो[3]ऽष्टार्धवक्त्रो[4] बभूव ।
गीर्वाणानामधीशो[5] दशशतभगतामाप्तवानस्तधैर्यः
सा[6] देवानामपीष्टा मनसि सुवदना वर्तते नुर्न[7] कस्य ॥ १०८ ॥
यत्कामार्तिं धुनीते सुखमुपचिनुते प्रीतिमाविष्करोति
सत्पात्राहारदानप्रभववरवृषस्यास्तदोषस्य हेतुः ।
वंशाभ्युद्धारकर्तुर्भवति तनुभुवः[9] कारणं कान्तकीर्ति-
स्तत्सर्वाभीष्टदातृ प्रवदत न कथं प्रार्थ्यते स्त्रीसुरत्नम्[8] ॥ १०९ ॥
कृष्णत्वं केशपाशे, वपुषि च कृशतां, नीचतां नाभिबिम्बे,
वक्रत्वं भ्रूलतायामलककुटिलतां, मन्दिमानं प्रयाणे[10], ।
चापल्यं नेत्रयुग्मे, कुचकलशयुगे कर्कशत्वं दधाना,
चित्रं दोषानपि स्त्री लसति मुखरुचा ध्वस्तदोषाकरश्रीः ॥ ११० ॥
बाहुद्वन्द्वेन मालां, मलविकलतया[11] पद्धतीं[12] स्वर्भवानां,
हंसीं गत्या[13],न्यपुष्टां मधुरवचनतो, नेत्रतो मार्गभार्याम्[14] ।
सीतां शीलेन, कान्त्या शिशिरकरतनुं, क्षान्तितो भूतधात्रीं[15]
सौभाग्यार्या[16] विजिग्ये गिरिपतितनयां, रूपतः कामपत्नीम् ॥ १११ ॥
वक्षोजौ कठिनौ, न वाग्विरचना, मन्दा गति,र्नो मति,-
र्वक्रं भ्रूयुगलं, मनो न जठरं, क्षामं नितम्बो न च, ।
युग्मं लोचनयोश्चलं, न चरितं, कृष्णाः कचा, नो गुणा,
नीचं नाभिसरोवरं, न रमणं, यस्या मनोज्ञाकृतेः ॥ ११२ ॥

१. अशोकवृक्षः. २. तिलोत्तमासङ्गात्. ३. ब्रह्मा. ४. चतुर्मुखः. ५. इन्द्रः. ६. स्त्री. ७. नरस्य. ८. स्त्रीसुरत्नम्. ९. पुत्रस्य. १०. गतौ. ११. निर्मलतया. १२. आकाशम्. १३. कोकिलाम्. १४. हरिणीम्. १५. सधनभूमिम्. १६. स्त्री.

स्त्रीतः सर्वज्ञनाथः सुरनतचरणो जायतेऽबाधबोध-
स्तस्मात्तीर्थं श्रुताख्यं जनहितकथकं मोक्षमार्गावबोधः ।
तस्मात्तस्माद्विनाशो भवदुरिततते: सौख्यमस्माद्विबाधं
बुध्वैवं स्त्रीं पवित्रां शिवसुखकरणीं सज्जनः स्वीकरोति ॥ ११३ ॥

भृत्यो मन्त्री विपत्तौ भवति, रतिविधौ यात्र वेश्या विदग्धा,
लज्जालुर्या विगीता गुरुजनविनता, गेहिनी गेहकृत्ये, ।
भक्त्या पत्यौ सखी, या स्वजनपरिजने धर्मकर्मैकदक्षा,
साल्पक्रोधाल्पपुण्यैः सकलगुणनिधिः प्राप्यते स्त्री न मर्त्यैः ॥ ११४ ॥

कृत्याकृत्ये न वेत्ति, त्यजति गुरुवचो, नीचवाक्यं करोति,
लज्जालुत्वं जहाति, व्यसनमतिमहद्गाहते निन्दनीयम्, ।
यस्यां शक्तो मनुष्यो निखिलगुणरिपोर्माननीयोऽपि लोके
सानर्थानां निधानं वितरतु युवतिः किं सुखं देहभाजाम् ॥११५॥

शश्वन्मायां करोति, स्थिरयति न मनो, मन्यते नोपकारं,
या वाक्यं वक्त्यसत्यं, मलिनयति कुलं, कीर्तिवल्लीं लुनाति, ।
सर्वारम्भैकहेतुर्विरतिसुखरतिध्वंसिनी निन्दनीया
तां धर्मारामभङ्गीं भजति न मनुजो मानिनीं मान्यबुद्धिः ॥११६॥

या विश्वासं नराणां जनयति, शतधालीकजल्पप्रपञ्चै,-
र्न प्रत्येति स्वयं तु, व्यपहरति गुणानेकदोषेण सर्वान् ।
कृत्वा दोषं विचित्रं रचयति निकृतिं यात्मकृत्यैकनिष्ठां
तां दोषाणां धरित्रीं रमयति रमणीं मानवो नो वरिष्ठः ॥११७॥

उद्यज्ज्वालावलीभिर्वरमिह भुवनप्लोषके हव्यवाहे
रङ्गद्वीचौ प्रविष्टं जलनिधिपयसि ग्राहनक्राकुले वा ।
संग्रामे वारिरौद्रे विविधशरहतानेकयोधाप्रधाने
नो नारीसौख्यमध्ये भवशतजनितानन्तदुःखप्रवीणे ॥ ११८ ॥

विद्युद्द्योतेन रूपं रजनिषु तिमिरे वीक्षितुं शक्यते यैः
पारं गन्तुं भुजाभ्यां विविधजलचरक्षोभिनां(णां) वारिधीनाम् ।

ज्ञातुं चारोऽमितानां वियति विचरतां ज्योतिषां मण्डलस्य
नो चित्तं कामिनीनामिति कृतमतयो दूरतस्तास्त्यजन्ति ॥ ११९ ॥

कात्र श्रीः श्रोणिविम्बे स्रवदुदरपुरावस्तिखद्वारवाच्ये,
लक्ष्मीः का कामिनीनां कुचकलशयुगे मांसपिण्डस्वरूपे ।
का कान्तिर्नेत्रयुग्मे जलकलुषजुषि, श्लेष्मरक्तादिपूर्णे
का शोभा वक्त्रगर्ते निगदत यदहो मोहिनस्ताः स्तुवन्ति ॥ १२० ॥

वक्त्रं लालाद्यवद्यं सकलशशिभृता, स्वर्णकुम्भद्वयेन
मांसग्रन्थी स्तनौ च, प्रगलदुरुमला स्यन्दनाङ्गेन योनिः ।
निर्गच्छद्दूषिकास्त्रं यदुपमितमहो पद्मपत्रेण नेत्रं
तच्चित्रं नात्र किंचिद्यदपगतमतिर्जायते कामिलोकः ॥ १२१ ॥

यत्त्वङ्मांसास्थिमज्जाक्षतजरसवसाशुक्रधातुप्रवृद्धं
विष्टामूत्रास्त्रगश्रुप्रभृतिमलनवस्त्रोत्रमत्र त्रिदोषे ।
वर्चःसद्मोपमाने कृमिकुलनिलयेऽत्यन्तबीभत्सरूपे
रज्यन्नङ्गे वधूनां व्रजति गतमतिः श्वभ्रगर्भे कृमित्वम् ॥ १२२ ॥

छायावद्यानवद्याचिररुचिचपला खड्गधारेव तीक्ष्णा
बुद्धिर्वा लुब्धकस्य प्रतिहतकरुणाव्याधिवन्नित्यदुःखा ।
वक्रा वा सर्परीतिः कुनृपगतिरिवावद्यकृत्यप्रचारा
चित्रा वा शक्रचापं भवचकितवुधैः सेव्यते स्त्री कथं सा ॥ १२३ ॥

संज्ञातोऽपीन्द्रजालं यदुत युवतयो मोहयित्वा मनुष्या-
न्नानाशास्त्रेषु दक्षानपि गुणकलितं दर्शयन्त्यात्मरूपम् ।
शुक्रासृग्यातनाक्तं ततकुथितमलैः प्रक्षरत्स्रोत्रगर्तैः
सर्वैरुच्चारपुञ्जं कुथितजठरभृच्छिद्रितं यद्वदत्र ॥ १२४ ॥

या सर्वोच्छिष्टवक्त्रा हितजनभुषणासद्गुणास्पर्शनीया
पूर्वाघर्मात्प्रजाता सततमलभृता निन्द्यकृत्यप्रवृत्ता ।
दानस्नेहा शुनीव भ्रमणकृतरतिश्चाटुकर्मप्रवीणा
योषा सा साधुलोकैरवगतजननैर्दूरतो वर्जनीया ॥ १२५ ॥

दुःखानां या निधानं भवनमविनयस्यार्गला स्वर्गपुर्याः
श्वभ्रावासस्य वर्त्म प्रकृतिरपयशः साहसानां निवासः ।
धर्मारामस्य शस्त्री गुणकमलहिमं मूलमेनोद्रुमस्य
मायावल्ली धरित्री कथमिह वनिता सेव्यते सा विदग्धैः ॥ १२६ ॥

श्रोणीसद्मप्रपन्नैः कृमिभिरतिशयारुंतुदैस्तुद्यमाना
यत्पीडातोऽतिदीना विदधति चलनं लोचनानां रमण्यः ।
तन्मन्यन्तेऽतिमोहादुपहतमनसः सद्विलासं मनुष्या
इत्येतत्तथ्यमुच्चैरमितगतियतिप्रोक्तमाराधनातः ॥ १२७ ॥

इति स्त्रीगुणदोषविचारः ॥ ६ ॥

दुरन्तमिथ्यात्वतमोदिवाकरा विलोकिताशेषपदार्थविस्तराः ।
उशन्ति मिथ्यात्वतमो जिनेश्वरा यथार्थतत्त्वाप्रतिपत्तिलक्षणम् ॥ १२८ ॥

विमूढतैकान्तविनीतसंशयप्रतीपताग्राहनिसर्गभेदतः ।
जिनैश्च मिथ्यात्वमनेकधोदितं भवार्णवभ्रान्तिकरं शरीरिणाम् ॥ १२९ ॥

परिग्रहेणापि युतास्तपस्विनो वधेऽपि धर्मं बहुधा शरीरिणाम् ।
अनेकदोषामपि देवतां जनस्त्रिमोहमिथ्यात्ववशेन भाषते ॥ १३० ॥

विबोधनित्यत्वसुखित्वकर्तृताविमुक्तितद्धेतुकृतज्ञतादयः ।
न सर्वथा जीवगुणा भवन्त्यमी भवन्ति चैकान्तदृशेति बुध्यते ॥ १३१ ॥

न धूयमानो भजति ध्वजः स्थितिं यथानिलैर्देवकुलोपरि स्थितः ।
समस्तधर्मानिलधूतचेतनो विनीतमिथ्यात्वपरस्तथा नरः ॥ १३२ ॥

समस्ततत्त्वानि न सन्ति सन्ति वा विरागसर्वज्ञनिवेदितानि वै ।
विनिश्चयः कर्मवशेन सर्वथा जनस्य संशीतिरुचेर्न जायते ॥ १३३ ॥

पयोयुतं शर्करया कटूयते यथैव पित्तज्वरभाविते जने ।
तथैव तत्त्वं विपरीतमङ्गिनः प्रतीपमिथ्यात्वदृशो विभासते ॥ १३४ ॥

प्रपूरितश्चर्मलवैर्यथाशनं न मण्डलश्चर्मकृतः समिच्छति ।
कुहेतुदृष्टान्तवचः प्रपूरितो जिनेन्द्रतत्त्वं वितथं प्रपद्यते ॥ १३५ ॥

---

१. कुक्कुरः.

यथान्धकारान्धपटावृतो जनो विचित्रचित्रं न विलोकितुं क्षमः ।
यथोक्ततत्त्वं जिननाथभाषितं निसर्गमिथ्यात्वतिरस्कृतस्तथा ॥ १३६ ॥
दयादमध्यानतपोव्रतादयो गुणाः समस्ता न भवन्ति सर्वथा ।
दुरन्तमिथ्यात्वरजोहतात्मनो रजोयुतालाबुगतं यथा पयः ॥ १३७ ॥
अवैति तत्त्वं सदसत्त्वलक्षणं विना विशेषं विपरीतलोचनः ।
यदृच्छया मत्तवदस्तचेतनो जनो जिनानां वचनात्पराङ्मुखः ॥ १३८ ॥
त्रिलोककालत्रयसंभवा सुखं सुदुःसहं यैस्त्रिविधं विलोक्यते ।
चराचराणां भवगर्तवर्तिनां तदत्र मिथ्यात्ववशेन जायते ॥ १३९ ॥
वरं विषं भुक्तमसुक्षयक्षमं वरं वनं श्वापदवन्निषेवितम् ।
वरं कृतं वह्निशिखाप्रवेशनं नरस्य मिथ्यात्वयुतं न जीवितम् ॥ १४० ॥
करोति दोषं न तमत्र केशरी न दन्दशूको न करी न भूमिपः ।
अतीव रुष्टो न च शत्रुरुद्धतो यमुग्रमिथ्यात्वरिपुः शरीरिणाम् ॥ १४१ ॥
दधातु धर्मं दशधा तु पावनं करोतु भिक्षाशनमस्तदूषणम् ।
तनोतु योगं धृतचित्तविस्तरं तथापि मिथ्यात्वयुतो न मुच्यते ॥ १४२ ॥
ददातु दानं बहुधा चतुर्विधं करोतु पूजामतिभक्तितोऽर्हताम् ।
दधातु शीलं तनुतामभोजनं तथापि मिथ्यात्ववशो न सिध्यति ॥ १४३ ॥
अवैतु शास्त्राणि नरो विशेषतः करोतु चित्राणि तपांसि भावतः ।
अतत्त्वसंसक्तमनास्तथापि नो विमुक्तसौख्यं गतबाधमश्नुते ॥ १४४ ॥
विचित्रवर्णाञ्चितचित्रमुत्तमं यथा गताक्षो न जनो विलोकते ।
प्रदर्श्यमानं न तथा प्रपद्यते कुदृष्टिजीवो जिननाथशासनम् ॥ १४५ ॥
अभव्यजीवो वचनं पठन्नपि जिनस्य मिथ्यात्वविषं न मुञ्चति ।
यथा विषं रौद्रविषोऽपि पन्नगः सशर्करं चारुपयः पिबन्नपि ॥ १४६ ॥
भजन्ति नैकैकगुणं त्रयस्त्रयो द्वयं द्वयं च त्रयमेककः परः ।
इमेऽत्र सप्तापि भवन्ति दुर्दृशा यथार्थतत्त्वप्रतिपत्तिवर्जिताः ॥ १४७ ॥
अनन्तकोपादिचतुष्टयोदये त्रिभेदमिथ्यात्वमलोदये यथा ।
दुरन्तमिथ्यात्वविषं शरीरिणामनन्तसंसारकरं प्ररोहति ॥ १४८ ॥

१. कृष्णवस्त्रावृतः. २. मनोवाक्कायगतम्. ३. अन्धः.

अलब्धदुग्धादिरसो रसावहं तदुद्भवो निम्बरसं कृमिर्यथा।
अदृष्टजैनेन्द्रवचोरसायनस्तथा कुतत्त्वं मनुते रसायनम् ॥ १४९ ॥
ददाति दुःखं बहुधातिदुःसहं तनोति पापोपचयोन्मुखं मतिम्।
यथार्थबुद्धिं विधुनोति पावनीं करोति मिथ्यात्वविषं न किं नृणाम् ॥ १५० ॥
अनेकधेति प्रगुणेन चेतसा विविच्य मिथ्यात्वमलं सदूषणम्।
विमुच्य जैनेन्द्रमतं सुखावहं भजन्ति भव्या भवदुःखभीरवः ॥ १५१ ॥
विमुक्तशङ्कादिसमस्तदूषणं विमुक्ततत्त्वप्रतिपत्तिमुज्ज्वलम्।
वदन्ति सम्यक्त्वमनन्तदर्शना जिनेशिनो नाकिनुताङ्घ्रिपङ्कजाः ॥ १५२ ॥
परोपदेशेन शशाङ्कनिर्मलं नरो निसर्गेण तदा तदश्नुते।
क्षयं शमं मिश्रमपागते मले यथार्थतत्त्वैकरुचेर्निषेधके ॥ १५३ ॥
सुरेन्द्रनागेन्द्रनरेन्द्रसंपदः सुखेन सर्वा लभते भ्रमन्भवे।
अशेषदुःखक्षयकारणं परं न दर्शनं पावनमश्नुते जनः ॥ १५४ ॥
जनस्य यस्यास्ति विनिर्मला रुचिर्जिनेन्द्रचन्द्रप्रतिपादिते मते।
अनेकधर्मान्विततत्त्वसूचके किमस्ति नो तस्य समस्तविष्टपे ॥ १५५ ॥
विधाय यो जैनमतस्य रोचनं मुहूर्तमप्येकमथो विमुञ्चति।
अनन्तकालं भवदुःखसंगतिं न सोऽपि जीवो लभते कथंचन ॥ १५६ ॥
यथार्थतत्त्वं कथितं जिनेश्वरैः सुखावहं सर्वशरीरिणां सदा।
निधाय कर्णे विहितार्थनिश्चयो न भव्यजीवो वितनोति दुर्मतिम् ॥१५७॥
विरागसर्वज्ञपदाम्बुजद्वये यतौ निरस्ताखिलसंगसंगतौ।
वृषे च हिंसारहिते महाफले करोति हर्षं जिनवाक्यभावितः ॥ १५८ ॥
भवाङ्गभोगेष्वपि भङ्गुरात्मना जयत्सु नारीजनचित्तसंततिम्।
भवार्णवभ्रान्तिविधानहेतुषु विरागभावं विदधाति सद्रुचिः ॥ १५९ ॥
कलत्रपुत्रादिनिमित्ततः क्वचिद्विनिन्द्यरूपे विहितेऽपि कर्मणि।
इदं कृतं कर्म विनिन्दितं सतां मयेति भव्यश्चकितो विनिन्दति ॥१६०॥
गलन्ति दोषाः कथिताः कथंचन प्रतप्तलोहे पतितं यथा पयः।
नयेषु तेषां व्रतिनां स्वदूषणं निवेदयत्यात्महितोद्यतो जनः ॥ १६१ ॥

निमित्ततो भूतमनर्थकारणं न यस्य कोपादिचतुष्टयं स्थितिम्।
करोति रेखा पयसीव मानसे सशान्तभावोऽस्ति विशुद्धदर्शनः॥ १६२॥
विशुद्धभावेन विधूतदूषणां करोति भक्तिं गुरुपञ्चके श्रुते।
श्रुतान्विते जैनगृहे जिनाकृतौ जिनेशतत्वैकरुचिः शरीरवान्॥ १६३॥
चतुर्विधे धर्मिजने जिनाश्रिते निरस्तमिथ्यात्वमलेऽतिपावने।
करोति वात्सल्यमनर्थनाशनं सुदर्शनो गौरिव तर्णके नवे॥ १६४॥
दुरन्तरोगोपहतेषु संततं पुरार्जिते नो वशता शरीरिषु।
करोति सर्वेषु विशुद्धदर्शनो दयां परामस्तसमस्तदूषणः॥ १६५॥
विशुद्धमेवंगुणमस्ति दर्शनं जनस्य यस्येह विमुक्तिकारणम्।
व्रतं विनाप्युत्तमसंचितं सतां सतीर्थकृत्त्वं लभतेऽतिपावनम्॥ १६६॥
दमो दयाध्यानमहिंसनं तपो जितेन्द्रियत्वं विनयो नयस्तथा।
ददाति नैतत्फलमङ्गधारिणां यदत्र सम्यक्त्वमनिन्दितं धृतम्॥ १६७॥
वरं निवासो नरकेऽपि देहिनां विशुद्धसम्यक्त्वविभूषितात्मनाम्।
दुरन्तमिथ्यात्वविषोपभोगिनां न देवलोके वसतिर्विराजते॥ १६८॥
अधस्तनश्वभ्रभुवो न याति षण्न सर्वनारीषु न संज्ञितोऽन्यतः।
न जायते व्यन्तरदेवजातिषु न भावनज्योतिषिकेषु सद्रुचिः॥ १६९॥
न बान्धवा नो सुहृदो न वल्लभा न देहजा नो धनधान्यसंचयाः।
तथा हिताः सन्ति शरीरिणां जने यथात्र सम्यक्त्वमदूषितं हितम्॥१७०॥
तनोति धर्मं, विधुनोति पातकं, ददाति सौख्यं, विधुनोति बाधकम्।
चिनोति मुक्तिं, विनिहन्ति संसृतिं, जनस्य सम्यक्त्वमनिन्दितं धृतम्१७१
मनोहरं सौख्यकरं शरीरिणां तदस्ति लोके सकले न किंचन।
यदत्र सम्यक्त्वधनस्य दुर्लभमिति प्रचिन्त्यात्र भवन्तु तत्पराः॥ १७२॥
विहाय दैवीं गतिमर्चितां सतां व्रजन्ति नान्यत्र विशुद्धदर्शनाः।
ततश्च्युताश्चक्रधरादिमानवा भवन्ति भव्या भवतीरवो(?) भुवि॥ १७३॥
प्रमाणसिद्धाः कथिता जिनेशिना व्ययोद्भवध्रौव्ययुता विमोहिताः।
समस्तभावा वितथा न वेत्ति यः करोति शङ्कां स निहन्ति दर्शनम् १७४

सुरासुराणामथ चक्रधारिणां निरीक्ष्य लक्ष्मीममलां मनोहराम्।
अनेन शीलेन भवेन्ममेति यस्तनोति काङ्क्षां स धुनोति सद्रुचिम्॥१७५॥
मलेन दिग्धानवलोक्य संयतान्प्रपीडितान्वा तपसा महीयसा।
नरश्चिकित्सां विदधाति यः परां निहन्ति सम्यक्त्वमसावचेतनः॥१७६॥
विलोक्य रौद्रव्रतिनोऽन्यलिङ्गिनः प्रकुर्वतः कन्दफलाशनादिकम्।
इमेऽपि कर्मक्षयकारकव्रता विचिन्वतेऽतिप्रतिहन्यते रुचिः॥ १७७॥
कुदर्शनज्ञानचरित्रचिद्रजा निरस्ततत्त्वार्थरुचीनसंयतान्।
निषेवमाणो मनसापि मानवो लुनाति सम्यक्त्वतरुं महाफलम्॥ १७८॥
जिनेन्द्रचन्द्रामलभक्तिभाविता निरस्तमिथ्यात्वमलेन देहिना।
प्रधार्यते येन विशुद्धदर्शनमवाप्यते तेन विमुक्तिकामिनी॥ १७९॥

इति सदसत्स्वरूपनिरूपणम्॥ ७॥

अनेकपर्यायगुणैरुपेतं विलोक्यते येन समस्ततत्त्वम्।
तदिन्द्रियानिन्द्रियभेदभिन्नं ज्ञानं जिनेन्द्रैर्गदितं हिताय॥ १८०॥
रत्नत्रयीं रक्षति येन जीवो विरज्यतेऽत्यन्तशरीरसौख्यात्।
रुणद्धि पापं, कुरुते विशुद्धिं, ज्ञानं तदिष्टं सकलार्थवद्भिः॥ १८१॥
क्रोधं धुनीते, विदधाति शान्ति, तनोति मैत्रीं, विहिनस्ति मोहम्,।
पुनाति चित्तं, मदनं लुनीते, येनेह बोधं तमुशन्ति सन्तः॥ १८२॥
ज्ञानेन बोधं कुरुते, परेषां कीर्तिस्ततश्चन्द्रमरीचिगौरी।
ततोऽनुरागः सकलेऽपि लोके ततः फलं तस्य मनोऽनुकूलम्॥ १८३॥
ज्ञानाद्धितं वेत्ति ततः प्रवृत्ती रत्नत्रये संचितकर्ममोक्षः।
ततस्ततः सौख्यमबाधमुच्चैस्तेनात्र यत्नं विदधाति दक्षः॥ १८४॥
यदज्ञजीवो विधुनोति कर्म तपोभिरुग्रैर्भवकोटिलक्षैः।
ज्ञानी तु चैकक्षणतो हिनस्ति तदत्र कर्मेति जिना वदन्ति॥ १८५॥
चौरादिदायादतनूजभूपैरहार्यमर्च्यं सकलेऽपि लोके।
धनं परेषां नयनैरदृश्यं ज्ञानं नरा धन्यतमा वहन्ति॥ १८६॥
विनश्वरं पापसमृद्धिदक्षं विपाकदुःखं बुधनिन्दनीयम्।
तदन्यथा भूतगणेन तुल्यं ज्ञानेन राज्यं न कदाचिदस्ति॥ १८७॥

पूज्यं स्वदेशे भवतीह राज्यं ज्ञानं त्रिलोकेऽपि सदर्चनीयम्।
ज्ञानं विवेकाय, मदाय राज्यं, ततो न ते तुल्यगुणे भवेताम् ॥ १८८ ॥
तमो धुनीते, कुरुते प्रकाशं, शमं विधत्ते, विनिहन्ति कोपम्,।
तनोति धर्मं, विधुनोति पापं, ज्ञानं न किं किं कुरुते नराणाम् ॥ १८९ ॥
यथा यथा ज्ञानबलेन जीवो जानाति तत्त्वं जिननाथदृष्टम्।
तथा तथा धर्ममतिप्रसक्ताः प्रजायते पापविनाशशक्ताः ॥ १९० ॥
आस्तां महाबोधबलेन साध्यो मोक्षो विबाधामलसौख्ययुक्तः।
धर्मार्थकामा अपि नो भवन्ति ज्ञानं विना तेन तदर्चनीयम् ॥ १९१ ॥
सर्वेऽपि लोके विधयो यथार्था ज्ञानादृते नैव भवन्ति जातु।
अनात्मनीयं परिहर्तुकामास्तदर्थिनो ज्ञानमतः श्रयन्ति ॥ १९२ ॥
शक्यो विजेतुं न मनः करीन्द्रो गन्तुं प्रवृत्तः प्रविहाय मार्गम्।
ज्ञानाङ्कुशेनात्र विना मनुष्यैर्विनाङ्कुशं मत्तमहाकरीव ॥ १९३ ॥
ज्ञानं तृतीयं पुरुषस्य नेत्रं समस्ततत्त्वार्थविलोकदक्षम्।
तेजोऽनपेक्ष्यं विगतान्तरायं प्रवृत्तिमत्सर्वजगत्त्रयेऽपि ॥ १९४ ॥
निःशेषलोकव्यवहारदक्षो ज्ञानेन मर्त्यो महनीयकीर्तिः।
सेव्यः सतां संतमसेन हीनो विमुक्तिकृत्यं प्रतिबद्धचित्तः ॥ १९५ ॥
धर्मार्थकामव्यवहारशून्यो विनष्टनिःशेषविचारबुद्धिः।
रात्रिंदिवं भक्षणसक्तचित्तो ज्ञानेन हीनः पशुरेव शुद्धः ॥ १९६ ॥
तपोदयादानश्रमक्षमाद्याः सर्वेऽपि पुंसां महिमा गुणा ये।
भवन्ति सौख्याय न ते जनस्य ज्ञानं विना तेन तदेषु पूज्यम् ॥ १९७ ॥
ज्ञानं विना नास्त्यहितान्निवृत्तिस्ततः प्रवृत्तिर्न हिते जनानाम्।
ततो न पूर्वार्जितकर्मनाशस्ततो न सौख्यं लभतेऽप्यभीष्टम् ॥ १९८ ॥
क्षेत्रे प्रकाशं नियतं करोति रविर्दिनेऽस्तं पुनरेव रात्रौ।
ज्ञानं त्रिलोके सकले प्रकाशं करोति नाच्छादनमस्ति किंचित् ॥ १९९ ॥
भवार्णवोत्तारणपूतनावं निःशेषदुःखेन्धनदाववह्निम्।
दशाङ्गधर्मं न करोति येन ज्ञानं तदिष्टं न जिनेन्द्रचन्द्रैः ॥ २०० ॥

गन्तुं समुल्लङ्घ्य भवाटवीं यो ज्ञानं विना मुक्तिपुरीं समिच्छेत् ।
सोऽन्धोऽन्धकारेषु विलङ्घ्य दुर्गं वनं पुरं प्राप्तुमना विचक्षुः ॥ २०१ ॥
ज्ञानेन पुंसां सकलार्थसिद्धिर्ज्ञानादृते काचन नार्थसिद्धिः ।
ज्ञानस्य मत्वेति गुणान्कदाचिज्ज्ञानं न मुञ्चन्ति महानुभावाः ॥ २०२ ॥
वरं विषं भक्षितमुग्रदोषं वरं प्रविष्टं ज्वलनेऽतिरौद्रे ।
वरं कृतान्ताय निवेदितं स्वं न जीवितं तत्त्वविवेकमुक्तम् ॥ २०३ ॥
शौचक्षमासत्यतपोदमाद्या गुणाः समस्ताः क्षणतश्चलन्ति ।
ज्ञानेन हीनस्य नरस्य लोके वात्याहता वा तरवोऽपि मूलात् ॥ २०४ ॥
माता पिता बन्धुजनः कलत्रं पुत्रः सुहृद्भूमिपतिश्च तुष्टः ।
न तत्सुखं कर्तुमलं नराणां ज्ञानं यदेवं स्थितमस्तदोषम् ॥ २०५ ॥
शक्यो वशीकर्तुमिभोऽतिमत्तः सिंहः फणीन्द्रः कुपितो नरेन्द्रः ।
ज्ञानेन हीनो न पुनः कथंचिदित्यस्य दूरे न भवन्ति सन्तः ॥ २०६ ॥
करोति संसारशरीरभोगविरागभावं विदधाति रागम् ।
शीलव्रतध्यानतपःकृपासु ज्ञानी विमोक्षाय कृतः प्रयासः ॥ २०७ ॥
परोपदेशं स्वहितोपकारं ज्ञानेन देही वितनोति लोके ।
जहाति दोषं श्रयते गुणं च ज्ञानं जनैस्तेन समर्चनीयम् ॥ २०८ ॥
एवं विलोक्यास्य गुणाननेकान्समस्तपापारिनिरासदक्षान् ।
विशुद्धबोधा न कदाचनापि ज्ञानस्य पूजां महतीं त्यजन्ति ॥ २०९ ॥

इति ज्ञाननिरूपणम् ॥ ८ ॥

सद्दर्शनज्ञानबलेन भूता पापक्रियाया विरतिस्त्रिधा या ।
जिनेश्वरैस्तद्गदितं चरित्रं समस्तकर्मक्षयहेतुभूतम् ॥ २१० ॥
शमं क्षयं मिश्रमुपागतायां तन्नाशिकर्म प्रकृतौ त्रिधातः ।
द्विधा सरागेतरभेदतश्च प्रजायते साधनसाध्यरूपम् ॥ २११ ॥
हिंसानृतस्तेयजनातिसङ्गनिवृत्तिरूपं व्रतमङ्गभाजाम् ।
पञ्चप्रकारं शुभसूतिहेतुर्जिनेश्वरैर्ज्ञातसमस्ततत्त्वैः ॥ २१२ ॥
जीवास्त्रसस्थावरभेदभिन्नास्त्रसाश्चतुर्धात्र भवेयुरन्ये ।
पञ्चप्रकारं त्रिविधेन तेषां रक्षामहिंसाव्रतमस्ति पूतम् ॥ २१३ ॥

स्पर्शेन वर्णेन रसेन गन्धाद्यदन्यथा वारिगतं स्वभावम् ।
तत्प्रांशुकं साधुजनस्य योग्यं पातुं मुनीन्द्रा निगदन्ति जैनाः ॥ २१४ ॥
उष्णोदकं साधुजनाः पिबन्ति मनोवचःकायविशुद्धिलब्धम् ।
एकान्ततस्तत्पिबतां मुनीनां षड्जीवघातं कथयन्ति सन्तः ॥ २१५ ॥
हतं घटीयन्त्रचतुष्पदादि सूर्येन्दुवाताग्निकरैर्मुनीन्द्राः ।
प्रत्यन्तवातेन हतं वहच्च यत्प्रांशुकं तन्निगदन्ति वारि ॥ २१६ ॥
भवत्यवश्यायहिमांशुधूसरीघनाम्बुशुद्धोदकबिन्दुसीकरान् ।
विहाय शेषं व्यवहारकारणं मनीषिणां वारिविशुद्धिमिच्छताम् ॥ २१७ ॥

उष्णोदकं प्रतिगृहं यदकारि लोकै-
स्तच्छ्रावकः पिबति नान्यजनः कदाचित् ।
तत्केवलं मुनिजनाय विधीयमानं
षड्जीवसंततिविराधनसाधनाय ॥ २१८ ॥

यथार्थवाक्यं रहितं कषायैरपीडनं प्राणिगणस्य पूतम् ।
गृहस्थभाषाविकलं यथार्थं सत्यं व्रतं स्याद्वदतां यतीनाम् ॥ २१९ ॥
ग्रामादिनष्टादि धनं परेषामगृह्णतोऽल्पादिमुनेस्त्रिधापि ।
भवत्यदत्तग्रहवर्जनाख्यं व्रतं मुनीनां गदितं हि लोके ॥ २२० ॥
विलोक्य मातृस्वसृदेहजावत्स्त्रीणां त्रिकं रागवशेन यासाम् ।
विलोकनस्पर्शनसंकथाभ्यो निवृत्तिरुक्तं तदमैथुनत्वम् ॥ २२१ ॥
सचेतनाचेतनभेदतोऽर्थाः परिग्रहाः सन्ति विचित्ररूपाः ।
तेभ्यो निवृत्तिस्त्रिविधेन यत्र नैःसङ्ग्यमुक्तं तदपास्तसङ्गैः ॥ २२२ ॥
युगान्तरप्रेक्षणतः स्वकार्याद्दिवा यथा जन्तुविवर्जितेन ।
यतो मुनेर्जीवविराधहान्या गतिर्वरेर्या समितिः समुक्ता ॥ २२३ ॥
आत्मप्रशंसापरदोषहासपैशून्यकार्कश्यविरुद्धवाक्यम् ।
विवर्ज्य भाषां वदतां मुनीनां वदन्ति भाषां समितिं जिनेन्द्राः ॥ २२४ ॥
अनुद्गमोत्पादनवल्भदोषा मनोवचःकायविकल्पशुद्धाः ।
स्वकारणा या मुनिपस्य भुक्तिस्तामेषणाख्यां समितिं वदन्ति ॥ २२५ ॥

आदाननिक्षेपविधेर्विधाने द्रव्यस्य योग्यस्य मुनेः सयत्नः ।
आदाननिक्षेपणनामधेयां वदन्ति सन्तः समितिं पवित्राम् ॥ २२६ ॥
दूरे विशाले जनजन्तुमुक्ते गूढे विरुद्धे त्यजतो मलानि ।
पूतां प्रतिष्ठापननामधेयां वदन्ति साधोः समितिं जिनेन्द्राः ॥ २२७ ॥
समस्तजन्तुप्रतिपालनार्थाः कर्माश्रवद्वारनिरोधदक्षाः ।
इमा मुनीनां निगदन्ति पञ्च पञ्चत्वमुक्ताः समितीर्जिनेन्द्राः ॥ २२८ ॥
प्रवृत्तयः स्वान्तवचस्तनूनां सूत्रानुसारेण निवृत्तयो वा ।
यास्ता जिनेशाः कथयन्ति तिस्रो गुप्तीर्विधूताखिलकर्मबन्धाः ॥ २२९ ॥
एवं चरित्रस्य चरित्रयुक्तैस्त्रयोदशाङ्गस्य निवेदितस्य ।
व्रतादिभेदेन भवन्ति भेदाः सामायिकाद्याः पुनरेव पञ्च ॥ २३० ॥
पञ्चाधिका विंशतिरस्तदोषैरुक्ताः कषायाः क्षयतः शमाद्वा ।
तेषां यथाख्यातचरित्रमुक्तं तन्मिश्रतायामितरं चतुष्कम् ॥ २३१ ॥
सद्दर्शनज्ञानफलं चरित्रं ते तेन हीने भवतो वृथैव ।
सूर्यादिसङ्गेन दिवेव नेत्रे नैतत्फलं येन वदन्ति सन्तः ॥ २३२ ॥
कषायमुक्तं कथितं चरित्रं कषायवृद्धावपघातमेति ।
यदा कषायः शममेति पुंसस्तदा चरित्रं पुनरेति पूतम् ॥ २३३ ॥
कषायसङ्गो सह तेन वृत्तं समार्द्रचक्षुर्न दिनं च रेणुम् ।
कषायसङ्गो विधुनन्ति तेन चारित्रवन्तो मुनयः सदापि ॥ २३४ ॥
निःशेषकल्याणविधौ समर्थं यस्यास्ति वृत्तं शशिकान्तिकान्तम् ।
मर्त्यस्य तस्य द्वितयेऽपि लोके न विद्यते काचन जातु भीतिः ॥ २३५ ॥
न चक्रनाथस्य न नाकिराजो न भोगभूपस्य न नागराजः ।
आत्मस्थितं शाश्वतमस्तदोषं यत्संयतस्यास्ति सुखं विबाधम् ॥ २३६ ॥
निवृत्तलोकव्यवहारवृत्तिः संतोषवानस्तसमस्तदोषः ।
यत्सौख्यमाप्नोति गतान्तरायं किं तस्य लेशोऽपि सरागचित्तः ॥ २३७ ॥
ससंशयं नश्वरमन्तदुःखं सरागचित्तस्य जनस्य सौख्यम् ।
तदन्यथा रागविवर्जितस्य तेनेह सन्तो न भजन्ति रागम् ॥ २३८ ॥

विनिर्मलं पार्वणचन्द्रकान्तं यस्यास्ति चारित्रमसौ गुणज्ञः ।
मानी कुलीनो जगतोऽभिगम्यः कृतार्थजन्मा महनीयबुद्धिः ॥ २३९ ॥
गर्भे विलीनं वरमत्र मातुः प्रसूतिकालेऽपि वरं विनाशः ।
असंभवो वा वरमङ्गभाजो न जीवितं चारुचरित्रमुक्तम् ॥ २४० ॥
निरस्तभूषोऽपि यथा विभाति पवित्रचारित्रविभूषितात्मा ।
अनेकभूषाभिरलंकृतोऽपि विमुक्तवृत्तो न तथा मनुष्यः ॥ २४१ ॥
सद्दर्शनज्ञानतपोदमाढ्याश्चारित्रभाजः सफलाः समस्ताः ।
व्यर्थाश्चरित्रेण विना भवन्ति ज्ञात्वेह सन्तश्चरिते यतन्ते ॥ २४२ ॥

इति चारित्रनिरूपणम् ॥ ९ ॥

अनेकमलसंभवे कृमिकुलैः सदा संकुले
विचित्रबहुवेदने बुधविनिन्दिते दुःसहे ।
भ्रमन्नयमनारतं व्यसनसंकटे देहवा-
न्पुरार्जितवशो भवे भवति भामिनीगर्भके ॥ २४३ ॥
शरीरमसुखावहं विविधदोषवर्चोगृहं
सशुक्ररुधिरोद्भवं भवभृता भवे भ्राम्यते ।
प्रगृह्य भवसंततेर्विदधता निमित्तं विधं
सरागमनसा सुखं प्रचुरमिच्छता तत्कृते ॥ २४४ ॥
किमस्य सुखमादितो भवति देहिनो गर्भके
किमङ्गमलभक्षणप्रभृतिदूषिते शैशवे ।
किमङ्गजकृता सुखव्यसनपीडिते यौवने
किमङ्गगुणमर्दनक्षमजराहते वार्धके ॥ २४५ ॥
किमत्र विरसे सुखं दयितकामिनीसेवने
किमन्यजनप्रीतये द्रविणसंचये नश्वरे ।
किमस्ति सु(भु)वि भङ्गुरे तनयदर्शने वा भवे
यतोऽत्र गतचेतसा तनुमता रतिर्बध्यते ॥ २४६ ॥
गतिर्विगलिता वपुः परिणतं हृषीकं मितं
कुलं नियमितं भवोऽपि कलितः सुखं संमितम् ।

परिभ्रमकृतं भवे भवभृता घटीयन्त्रव-
 द्भवस्थितिरियं सदा परिमिताप्यनन्ता कृता ॥ २४७ ॥
तदस्ति न वपुर्भृता यदिह नोपभुक्तं सुखं
 न सा गतिरनेकधा गतवता न या गाहिता ।
न ता नरपतिश्रियः परिचिता न या संसृतौ
 न सोऽस्ति विषयो न यः परिचितः सदा देहिनाम् ॥ २४८ ॥
इदं स्वजनदेहजातनयमातृभार्यामयं
 विचित्रमिह केनचिद्रचितमिन्द्रजालं तनु ।
क कस्य कथमत्र को भवति तत्त्वतो देहिनः[1]
 स्वकर्मवशवर्तिनस्त्रिभुवने निजो वा परः ॥ २४९ ॥
हृषीकविषयं सुखं किमिह यन्न भुक्तं भवे
 किमिच्छति नरः परं सुखमपूर्वभूतं तनु ।
कुतूहलमपूर्वजं भवति नाङ्गिनोऽस्यास्ति चे-
 त्समैकसुखसंग्रहे किमपि नो विधत्ते मनः ॥ २५० ॥
क्षणेन समवानतो भवति कोपवान्संसृतौ
 विवेकविकलः शिशुर्विरहकातरो वा युवा ।
जरार्दिततनुस्तदा विगतसर्वचेष्टो जरी
 दधाति नटवन्नरः प्रचुरवेषरूपं वपुः ॥ २५१ ॥
अनेकगतिचित्रितं विविधजातिभेदाकुलं
 समेत्य तनुमद्गुणः प्रचुरचित्तचेष्टोद्यतः ।
पुरार्जितविचित्रकर्मफलभुग्विचित्रां तनुं
 प्रगृह्य नटवत्सदा भ्रमति जन्मरङ्गाङ्गणे ॥ २५२ ॥
अचिन्त्यमतिदुःसहं त्रिविधदुःखमेनोर्जितं[2]
 चतुर्विधगतिश्रितं भवभृता न किं प्राप्यते ।
शरीरमसुखाकरं जगति गृह्णता मुञ्चता
 तनोति न तथाप्ययं विरतिमूर्जितां पापतः ॥ २५३ ॥

---

१. शरीरिणः. २. मनोवचःकायोत्पन्नम्.

भजन्त्यतनुपीडितो विरहकातरः कामिनीं
करोति मदनोज्झितो विरतिमङ्गनासंगतः ।
तपस्यति मुनिः सुखी हसति विक्लवः क्लिश्यति
विचित्रमतिचेष्टितं श्रयति संसृतौ जन्मवान् ॥ २५४ ॥

अनेकभवसंचिता इह हि कर्मणा निर्मिताः
प्रियाप्रियवियोगसंगमविपत्तिसंपत्तयः ।
भवन्ति सकलास्विमा गतिषु सर्वदा देहिनां
जरामरणवीचिके जननसागरे मज्जताम् ॥ २५५ ॥

करोम्यहमिदं तदा कृतमिदं करिष्याम्यदः
पुमानिति सदा क्रियाकरणकारणव्यावृतः ।
विवेकरहिताशयो विगतसर्वधर्मक्षमो
न वेत्ति गतमप्यहो जगति कालमत्याकुलः ॥ २५६ ॥

इमे मम धनाङ्गजस्वजनवल्लभादेहजा
सुहृज्जनकमातुलप्रभृतयो भृशं वल्लभाः ।
मुधेति हतचेतनो भववने चिरं खिद्यते
यतो भवति कस्य को जगति वालुकामुष्टिवत् ॥ २५७ ॥

तनूजजननीपितृस्वसृसुताकलत्रादयो
भवन्ति निखिला जनाः कृतपरस्परोत्पत्तयः ।
किमत्र बहुनात्मनो जगति देहजो जायते
धिगस्तु भवसंततिं भवभृतां सदा दुःखदा ॥ २५८ ॥

विधाय नृपसेवनं धनमवाप्य चित्तेप्सितं
करोमि परिपोषणं निजकुटुम्बकस्याङ्गनाः ।
मनोनयनवल्लभाः समदना निषेवे तथा
सदेति कृतचेतसा स्वहिततो भवे भ्राम्यते ॥ २५९ ॥

विवेकविकलः शिशुः प्रथमतोऽधिकं मोदते
ततो मदनपीडितो युवतिसंगमं वाञ्छति ।

पुनर्जरसमाश्रितो भवति सर्वनष्टक्रियो
विचित्रमतिजीवितं परिणतेर्न लज्जायते ॥ २६० ॥

विनश्वरमिदं वपुर्युवतिमानसं चञ्चलं
भुजङ्गकुटिलो विधिः पवनगत्वरं जीवितम् ।
अपायबहुलं धनं बत परिप्लवं यौवनं
तथापि न जना भवव्यसनसंततेर्बिभ्यति ॥ २६१ ॥

विपत्तिसहिताः श्रियो सुखयुतं सुखं जन्मिनां
वियोगविषदूषिता जगति सज्जनैः संगतिः ।
रजोरगबिलं वपुर्मरणनिन्दितं जन्मिनां
तदप्ययमनारतं हतमतिर्भवे रज्यति ॥ २६२ ॥

असातहुतभुक्शिखाकवलितं जगन्मन्दिरं
सुखं विषमवातभुग्रसनवच्चलं कामजम् ।
जलस्थशशिचञ्चलां भुवि विलोक्य लोकस्थितिं
विमुञ्चत जनाः सदा विषयमूर्छनां तत्त्वतः ॥ २६३ ॥

भवेऽत्र कठिनस्तनीस्तरललोचनां कामिनीं
धरापरिवृढश्रियं चपलचामरभ्राजिताम् ।
रसादिविषयांस्तथा सुखकरान्न कः सेवते
भवेद्यदि जनस्य नो तृणशिरोम्बुवज्जीवितम् ॥ २६४ ॥

हसन्ति धनिनो, जना गतधना रुदन्त्यातुराः,
पठन्ति कृतबुद्धयोऽकृतधियोऽनिशं शेरते, ।
तपन्ति मुनिपुंगवा, विषयिणो रमन्ते तथा,
करोति नटनर्तनक्रममयं भवो जन्मिनाम् ॥ २६५ ॥

न किं तरललोचना समदकामिनीवल्लभा
विभूतिरपि भूभुजां धवलचामरच्छत्रभृत् ।
मरुच्चलितदीपवज्जगदिदं विलोक्यास्थिरं
परं तु सकलं जनाः कृतधियो वनान्ते गताः ॥ २६६ ॥

इति प्रकुपितोरगप्रमुखभङ्गुरां सर्वदा
निधाय निजचेतसि प्रबलदुःखदां संसृतिम् ।
विमुञ्चत परिग्रहग्रहमनार्जवं सज्जना
यदीच्छत सुखामृतं रसितुमस्तसर्वाशुभम् ॥ २६७ ॥

मनोभवशरार्दितः स्मरति कामिनीं यो नरो
विचिन्तयति सापरं मदनकातराङ्गी परम् ।
परोऽपि परभामिनीमिति विभिन्नभावेप्सितां
विलोक्य जगतः स्थितिं बुधजनास्तपः कुर्वते ॥ २६८ ॥

इति जातिनिरूपणम् ॥ १० ॥

जनयति वचो व्यक्तं, वक्त्रं तनोति मलाविलं,
स्खलयति गतिं, हन्ति स्थाम[1], श्लथीकुरुते तनुम्, ।
दहति शिखिवत्सा गर्वाङ्गना(?)यौवनकाननं,
गमयति वपुर्मर्त्यानां वा, करोति जरा न किम् ॥ २६९ ॥

प्रबलपवनापातध्वस्तप्रदीपशिखोपमै-
रलमलनिचैः कामोद्भूतैः सुखैर्विषसंनिभैः ।
समपरिचितैर्दुःखप्राप्तैः सतामतिनिन्दितै-
रिति कृतमनाः शङ्के वृद्धः प्रकम्पयते करौ ॥ २७० ॥

चलयति तनुं, दृष्टेर्भ्रान्तिं करोति शरीरिणां,
रचयति बलादव्यक्तोक्तिं, तनोति गतिक्षितिम् ।
जनयति जने नुद्यां, निन्दामनर्थपरम्परां
हरति सुरभिं गन्धं देहाज्जरा मदिरा यथा ॥ २७१ ॥

भवति मरणं प्रत्यासन्नं, विनश्यति यौवनं,
प्रभवति जरा सर्वाङ्गानां विनाशविधायिनी ।
विरमत बुधाः कामार्थेभ्यो वृषे कुरुतादरं
वदितुमिति वा कर्णोपान्ते स्थितं पलितं जने ॥ २७२ ॥

---

१. सामर्थ्यमित्यर्थः.

मदनसदृशं यं पश्यन्ती विलोचनहारिणी
शिथिलिततनुः कामावस्थां गता मदनातुरा ।
तदपि जरसा शीर्णं मर्त्यं बलादिह भोज्यते
जगति युवतिर्वा भैषज्यं विमुक्तरतस्पृहा ॥ २७३ ॥
भवति विषयान्मोक्तुं भोक्तुं न च क्षमचेष्टितो
वपुषि जरसा जीर्णो देही विधूतबलः परम् ।
रसति तरसा त्वस्थीनि श्वा यथा त्रपयोज्झितः
कररसनया धिग्जीवानां विचेष्टितमीदृशम् ॥ २७४ ॥
तिमिरपिहिते नेत्रे लालावलीमलिनं मुखं
विगलितगती पादौ देहो विसंस्थुलतां गतः ।
पलितकलितो मूर्धा कम्पत्यबोधि जराङ्गना-
मिव कृतपदां तृष्णा नारी तथापि न मुञ्चति ॥ २७५ ॥
गलति सकलं रूपं, लालां विमुञ्चति जल्पनं,
स्खलति गमनं, दन्ता नाशं श्रयन्ति शरीरिणः, ।
विरमति मतिर्नो शुश्रूषां करोति च गेहिनी,
वपुषि जरसा ग्रस्ते वाक्यं तनोति न देहजः ॥ २७६ ॥
रचयति मतिं धर्मे, नीतिं तनोत्यतिनिर्मलां,
विषयविरतिं धत्ते, चेतः शमं नयते, पराम् ।
व्यसननिहतिं दत्ते, सूते विनीतिमथार्चिता
मनसि निहिता प्रायः पुंसां करोति जरा हितम् ॥ २७७ ॥
युवतिरपरा नो भोक्तव्या त्वया मम संनिधा-
विति निगदितस्तृष्णां योषां न मुञ्चति किं सताम् ।
निगदितुमिति श्रोतोपान्तं गतेव जराङ्गना
पलितमिषतो न स्त्रीमन्यां यतः सहतेऽङ्गना ॥ २७८ ॥
वचनरचना जाता व्यक्ता मुखं वलिभिः श्रितं
नयनयुगलं ध्वान्ताघ्रातं शितं पलितं शिरः ।

विघटितगती पादौ हस्तौ सवेपथुतां गतौ
तदपि मनसस्तृष्णा कष्टं व्युपैति न देहिनाम् ॥ २७९ ॥

सुखकरतनुस्पर्शां गौरीं करग्रहलालितां
नयनदयितां वंशोद्भूतां शरीरबलप्रदाम् ।
धृतसरलतां वृद्धो यष्टिं न पर्वविभूषितां
त्यजति तरुणीं त्यक्त्वाप्यन्यां जरावनितासखीम् ॥ २८० ॥

त्यजसि न हते तृष्णायोषे जराङ्गनया नरं
रमितवपुषं धिक्ते स्त्रीत्वं शठे त्रपयोज्झिते ।
इति निगदिता कर्णाभ्यर्णे गतैः पलितैरियं
तदपि न गता तृष्णा का वा नु मुञ्चति वल्लभाम् ॥ २८१ ॥

त्यजत विषयान्दुःखोत्पत्तौ पटूननिशं खला-
न्भजत विषयाज्जन्मारातेर्निराशकृतौ हितान् ।
जरयति यतः कालः कायं निहन्ति च जीवितं
वदितुमिति वा कर्णोपान्ते गतं पलितं जनाः ॥ २८२ ॥

हरति विषयान्दण्डालम्बे करोति गतिस्थिती
स्खलयति पथि स्पष्टं नार्थं विलोकयितुं क्षमा ।
परिभवकृतः सर्वाश्चेष्टास्तनोत्यनिवारिता
कुनृपमतिवद्देहं नृणां जरा परिजृम्भते ॥ २८३ ॥

शिरसि निभृतं कृत्वा पादं प्रपातयति द्विजा-
न्पिबति रुधिरं, मांसं सर्वं समत्ति शरीरिणाम् ।
स्थपुटविषमं चर्माङ्गानां दधाति शरीरिणां
विचरति जरा संहाराय क्षिताविव राक्षसी ॥ २८४ ॥

भुवनसदनप्राणिग्रामप्रकम्पविधायिनी
निकुञ्चिततनुर्भीमाकारा जरा जरती रुषा ।
निहितमनसं तृष्णाभार्यां निरीक्ष्य नरं भृशं
पलितमिषतो जातेर्ष्या वा करोति कचग्रहम् ॥ २८५ ॥

विमदमृषिवच्छ्रीकण्ठं वा गदाङ्कितविग्रहं
शिशिरकरवद्वक्रं चेषं विरूपविलोचनम् ।
रविमिव तमोमुक्तं दण्डाश्रितं च यमं यथा
वृषमपि विना मर्त्यं निन्द्या करोतितरां जरा ॥ २८६ ॥

विगतदशनं शश्वल्लालाततताकुलसृक्ककं
स्खलति चरणाक्षेपं मुखापरिस्फुटजल्पनम् ।
रहितकरणव्यक्तारम्भं मृदूकृतमूर्धजं
पुनरपि नरं पापाचालं करोतितरां जरा ॥ २८७ ॥

अहह नयने मिथ्या दृग्वत्सदीक्षणवर्जिते
श्रवणयुगलं दुष्पुत्रो वा शृणोति न भाषितम् ।
स्खलति चरणद्वन्द्वं मार्गे मदाकुललोकव-
द्वपुषि जरसा जीर्णे वर्णो व्यपैति कलत्रवत् ॥ २८८ ॥

मुदितमनसो दृष्ट्वा रूपं यदीयमकृत्रिमं
परवशधियः कामक्षिप्तैर्भवन्ति शिलीमुखैः ।
धवलितमुखभ्रूमूर्धानं जरसा धरात्रयं
झटिति मनुजं चाण्डालं वा त्यजन्ति जनाङ्गनाः ॥ २८९ ॥

नयनयुगलं व्यक्तं रूपं विलोकितुमक्षमं
पलितकलितो मूर्धा कम्पी श्रुती श्रुतिवर्जिते ।
वपुषि जरसाश्लिष्टे नष्टं विचेष्टितमुत्तमं
मरणचकितो नाङ्गी धत्ते तथापि तपोहितम् ॥ २९० ॥

द्युतिगतिधृतिप्रज्ञालक्ष्मीपुरःसरयोषितः
सितकचवलिव्याजान्मर्त्यं निरीक्ष्य जराङ्गनाम् ।
प्रदधती चेर्ष्यां तृष्णानारी पुनर्न विनिर्गता
त्यजति हि न वा स्त्री प्रेयांसं कृतागसमप्यलम् ॥ २९१ ॥

परिणतिमतिस्पष्टां दृष्ट्वा तनोर्गुणनाशिनीं
झटिति न नराः संसाराब्धेः समुत्तरणोद्यताः ।

जिनपतिमतं श्रित्वा पूतं विमुच्य परिग्रहं
विदधति हितं कृत्यं सम्यक्तपश्चरणादिकम् ॥ २९२ ॥

इति जरानिरूपणम् ॥ ११ ॥

संसारे भ्रमतां पुरार्जितवशाद्दुःखं सुखं वाश्नुतां
चित्रं जीवितमङ्गिनां खपरतः संपद्यमानापदाम् ।
दन्तान्तःपतितं मनोहररसं कालेन पक्कं फलं
स्थास्यत्यत्र कियच्चिरं तनुमतस्तीव्रं क्षुधार्चार्चितम् ॥ २९३ ॥

नित्यं व्याधिशताकुलस्य विधिना संक्षिप्यमाणायुषो
नाश्चर्यं भववर्तिनः श्रममतो यज्जायते पञ्चता ।
किं नामाद्भुतमत्र काननतरोरत्याकुलात्यक्षिभि-
र्यत्प्रोद्यत्पवनप्रतापनिहिता त्यक्तं फलं भ्रश्यति ॥ २९४ ॥

निर्धूतान्यबलोऽविचिन्त्यमहिमा प्रध्वस्तदुर्गक्रियो
विश्वव्यापिगतिः कृपाविरहितो दुर्बोधमन्त्रः शठः ।
शस्त्रास्त्रोदकपावकारिपवनव्याध्यादिनानायुधो
गर्भादावपि हन्ति जन्तुमखिलं दुर्वारवीर्योपमः ॥ २९५ ॥

प्राज्ञं मूर्खमनार्यमार्यमधनं द्रव्याधिपं दुःखितं
सौख्योपेतमनाम[1]मामनिहितं[2] धर्मार्थिनं पापिनम् ।
व्यावृत्तं व्यसनादराद्व्यसनिनं व्यासाकुलं दानिनं
शिष्टं दुष्टमनर्यमर्यमखिलं लोकं निहन्त्यन्तकः ॥ २९६ ॥

देवाराधनमन्त्रतन्त्रहवनध्यानगृहेज्याजप-
स्थानत्यागधराप्रवेशगमनव्रज्या द्विजार्चादिभिः ।
अत्युग्रेण यमेश्वरेण तनुमानङ्गीकृतो भक्षितुं
व्याघ्रेणेव बुभुक्षितेन गहने नो शक्यते रक्षितुम् ॥ २९७ ॥

प्रारब्धो ग्रसितुं यमेन तनुमान्दुर्वारवीर्येण य-
स्तं त्रातुं भुवने न कोऽपि शकले शक्तो नरो वासुरः ।

१. सरोगम्. २. नीरोगम्.

नो चेद्देवनरेश्वरप्रभृतयः पृथ्व्यां सदा स्युर्जना
विज्ञायेति करोति शुद्धधिषणो धर्मे मतिं शाश्वते ॥ २९८ ॥
चन्द्रादित्यपुरंदरक्षितिधरश्रीकण्ठसीर्यादयो
ये कीर्तिद्युतिकान्तिधीधनवलप्रख्यातपुण्योदयाः ।
स्वे स्वे तेऽपि कृतान्तदन्तकलिताः काले व्रजन्ति क्षयं
किं चान्येषु कथासु चारुमतयो धर्मे मतिं कुर्वताम् ॥ २९९ ॥
ये लोकेशशिरोमणिद्युतिजलप्रक्षालिताङ्घ्रिद्वया
लोकालोकविलोकिकेवललसत्साम्राज्यलक्ष्मीधराः ।
प्रक्षीणायुषि यान्ति तीर्थपतयस्तेऽप्यस्तदेहास्पदं
तत्रान्यस्य कथं भवेद्भवभृतः क्षीणायुषो जीवितम् ॥ ३०० ॥
द्वात्रिंशन्मुकुटावतंसितशिरोभूभृत्सहस्रार्चिताः
षट्खण्डक्षितिमण्डना नृपतयः साम्राज्यलक्ष्मीधराः ।
नीता येन विनाशमत्र विधिना सोऽन्यान्विमुञ्चेत्कथं
कल्पान्तश्वसनो गिरींश्चलयति स्थैर्यं तृणानां कुतः ॥ ३०१ ॥
यात्रादित्यशशाङ्कमारुतघना नो सन्ति सन्त्यत्र ते
देशा यत्र न मृत्युरञ्जनजनो नो सोऽस्ति देशः क्वचित् ।
सम्यग्दर्शनबोधवृत्तजनितां मुक्त्वा विमुक्तिस्थितिं
संचिन्त्येति विचक्षणाः पुरु तपः कुर्वन्तु तामीप्सवः ॥३०२॥
येषां स्त्री स्तनचक्रवाकयुगले पीतांशु राजत्तटे
निर्जित्कौस्तुभरत्नरश्मिसलिले आस्याम्बुजभ्राजिते ।
श्रीवक्षः कमलाकरे गतभया क्रीडां चकारापरां-
श्चार्हच्छ्रीहरयोऽपि ते मृतिमिताः[1] कुत्रापरेषां स्थितिः ॥३०३॥
भोक्ता यत्र वितृप्तिरन्तकविभुर्भोज्याः समस्ताङ्गिनः
कालेशः परिवेषकोऽश्रमतनुर्ग्रासावसन्त्यक्रमैः ।
वक्त्रे तस्य निशातदन्तकलिते तत्र स्थितिः कीदृशी
जीवानामिति मृत्युभीतमनसो जैनं तपः कुर्वते ॥ ३०४ ॥

---

1. मृतिं गताः.

उद्धर्तुं धरणीं निशाकररवी क्षेप्तुं मरुन्मार्गतो
वातं स्तम्भयितुं पयोनिधिजलं पातुं गिरिं चूर्णितम्।
शक्ता यत्र विशन्ति मृत्युवदने कान्यस्य तत्र स्थिति-
र्यस्मिन्माति गिरिर्बिले सह वनैः कात्र व्यवस्था ह्यणोः॥२०५॥
सुग्रीवाङ्गदनीलमारुतसुतपृष्टैः कृताराधनो
रामो येन विनाशितस्त्रिभुवनप्रख्यातकीर्तिध्वजः।
मृत्योस्तस्य परेषु देहिषु कथा का निघ्नतो विद्यते
कात्रास्था न यतो द्विपं हि शशको निर्यापकः स्रोतसः॥२०६॥
अत्यन्तं कुरुतां रसायनविधिं वाक्यं प्रियं जल्पतु
वार्धेः पारमियर्तु गच्छतु नभो देवाद्रिमारोहतु।
पातालं विशतु प्रसर्पतु दिशं देशान्तरं भ्राम्यतु
न प्राणी तदपि प्रहर्तुमनसा संत्यज्यते मृत्युना॥ २०७॥
कार्यं यावदिदं करोमि विधिवत्तावत्करिष्याम्यद-
स्तत्कृत्वा पुनरेतदद्य कृतवानेतत्पराकारितम्।
इत्यात्मीयकुटुम्बपोषणपरः प्राणी क्रियाव्याकुलो
मृत्योरेति करग्रहं हतमतिः संत्यक्तधर्मक्रियः॥ २०८॥
मान्धाता भरतः शिवी दशरथो लक्ष्मीधरो रावणः
कर्णः केशिरिपुर्बलो भृगुपतिर्भीमः परेऽप्युन्नताः।
मृत्युं जेतुमलं भयं नृपतयः कस्तं परो जेष्यते
भग्नो यो न महातरुर्द्विपवरैस्तं किं शिशो भक्षति॥ २०९॥
सर्वं शुष्यति सान्द्रमेति निखिला पाथोनिधिं निम्नगा
सर्वं म्लायति पुष्पमत्र मरुतः शम्प्येव सर्वं चलम्।
सर्वं नश्यति कृत्रिमं च सकलो यद्वद्व्यपक्षीयते
सर्वस्तद्वदुपैति मृत्युवदनं देहीभवंस्तावतः॥ २१०॥
प्रख्यातद्युतिकान्तिकीर्तिधिषणाः प्रज्ञाकलाभूतयो
देवा येन पुरंदरप्रभृतयो नीताः क्षयं मृत्युना।

१. समुद्रस्य. २. विद्युदिव.

तस्यान्येषु जनेषु कात्र गणना हिंसात्मनो विद्यते
मत्तेभं हि हिनस्ति यः स हरिणं किं मुञ्चते केशरी ॥३११॥
श्रीह्रीकीर्तिरतिद्युतिप्रियतमा प्रज्ञा कलाभिः समं
यद्ग्रासीकुरुते नितान्तकठिनो मर्त्यं कृतान्तः शठः ।
तस्मात्किं तदुपार्जनेन भविनां कृत्यं विबुद्धात्मनां
किंतु श्रेयसि जीविते सति चले कार्या मतिस्तत्त्वतः ॥३१२॥
यो लोकैकशिरःशिखामणिसमं सर्वोपकारोद्यतं
राजच्छीलगुणाकरं नरवरं कृत्वा पुनर्निर्दयः ।
धाता हन्ति निरर्गलो हतमतिः किं तत्क्रियायां फलं
प्रायो निर्दयचेतसां न भवति श्रेयोमतिर्भूतले ॥ ३१३ ॥
रम्याः किं न विभूतयोऽतिललिताः सच्चामरभ्राजिताः
किं वा पीनदृढोन्नतस्तनयुगास्त्रस्तैणदीर्घेक्षणाः ।
किं वा सज्जनसंगतिर्न सुखदा चेतश्चमत्कारिणी
किं त्वत्रानिलधूतदीपकलिकाच्छायाचलं जीवितम् ॥ ३१४ ॥
यद्येतास्तरलेक्षणा युवतयो न स्युर्गलद्यौवना
भूतिर्वा यदि भूभृतां भवति नो सौदामिनीसंनिभा ।
वातोद्धूततरङ्गचञ्चलमिदं नो चेद्भवेज्जीवितं
को नामेह तदेव सौख्यविमुखः कुर्याज्जिनानां तपः ॥३१५॥
मांसासृग्रसलालसामयगणव्याधैः समाध्यासितां
नानापायवसुंधरारुहचितां जन्माटवीमाश्रितः ।
धावन्नाकुलमानसो निपतितो दृष्ट्वा जराराक्षसीं
क्षुत्क्षामोद्धृतमृत्युपन्नगमुखे प्राणी कियत्प्राणिति ॥ ३१६ ॥
मृत्युव्याघ्रभयंकराननगतं भीतं जराव्याधत-
स्तीव्रव्याधिदुरन्तदुःखतरुमत्संसारकान्तारगम् ।
कः शक्नोति शरीरिणं त्रिभुवने पातुं नितान्तातुरं
त्यक्त्वा जातिजरामृतिक्षतिकरं जैनेन्द्रधर्मामृतम् ॥ ३१७ ॥

एवं सर्वजगद्विलोक्य कलितं दुर्वारवीर्यात्मना
निस्त्रिंशेन समस्तसत्त्वसमितिप्रध्वंसिना मृत्युना ।
सद्रत्नत्रयशातमार्गणगणं गृह्णन्ति यच्छित्तये[1]
सन्तः शान्तधियो जिनेश्वरतपःसाम्राज्यलक्ष्मीश्रिताः ॥३१८॥

इति मृत्युनिरूपणम् ॥ १२ ॥

कार्याणां गतयो भुजङ्गकुटिलाः स्त्रीणां मनश्चञ्चलं
नैश्वर्यं स्थितिमत्तरंगचपलं नृणां च यो धावति ।
संकल्पाः समदाङ्गनाक्षितरलाः मृत्युः परं निश्चितो
मत्वैवं मतिसत्तमा विदधतां धर्मे मतिं तत्त्वतः ॥ ३१९ ॥

श्रीविद्युच्चपलावपुर्विधुनितं नानाविधव्याधिभिः
सौख्यं दुःखकटाक्षितं तनुमतां सत्संगतिर्दुर्लभा ।
मृत्युर्ध्यासितमायुरलबहुभिः किं भाषितैस्तत्त्वतः
संसारेऽस्ति न किंचिदङ्गिसुखकृत्तसाज्जना जाग्रत ॥ ३२० ॥

यद्येताः स्थिरयौवनाः शशिमुखीः पीनस्तनीर्भामिनीः
कुर्याद्यौवनकालमानमथवा धातारतं जीवितम् ।
चिन्तास्थैर्यमशौचमन्तविरसं सौख्यं वियोगं ननु
को नामेह विमुच्य चारुधिपणः कुर्यात्तपो दुश्चरम् ॥ ३२१ ॥

कान्ताः किं न शशाङ्ककान्तिधवलाः सौधालयाः कस्यचि-
त्काञ्चीदामविराजितोरुजघनाः सेव्या न किं कामिनी ।
किं वा श्रोत्ररसायनं सुखकरं श्रव्यं न गीतादिकं
विश्वं किं तु विलोक्य मारुतचलं सन्तस्तपः कुर्वते ॥ ३२२ ॥

कृष्टेष्वासविमुक्तमार्गणगतिस्थैर्यं[2] जने यौवनं
कामान्क्रुद्धभुजङ्गकायकुटिलान्विद्युच्चलं जीवितम् ।
अङ्गारानलतप्तसूतरसवद्दृष्ट्वा श्रियोऽप्यस्थिरा
निष्क्रम्यात्र सुबुद्धयो वरतपः कर्तुं वनान्तं गताः ॥ ३२३ ॥

---

१. यस्य च्छेदनाय. २. आरोपितचापविमुक्तबाणगतिवद्यौवनम्.

वपुर्व्यसनमस्यति प्रसभमन्तको जीवितं
धनं नृपसुतादयस्तनुमतां जरा यौवनम् ।
वियोगदहनं सुखं समदकामिनीसंगजं
तथापि वत मोहिनो दुरितसंगृहं कुर्वते ॥ ३२४ ॥

अपायकलिता तनुर्जगति सापदः संपदो
विनश्वरमिदं सुखं विषयजं श्रियश्चञ्चलाः ।
भवन्ति जरसा रसास्तरललोचना योषित-
स्तदप्ययमहो जनस्तपसि नो परै रज्यति ॥ ३२५ ॥

भवे विरहितो भवन्भवभृतो न के बान्धवाः
स्वकर्मवशतो न केऽत्र शत्रवो भविष्यन्ति वा ।
जनः किमिति मोहितो नवकुटुम्बकस्यापदि
विमुक्तजिनशासनः स्वहिततः सदा भ्रश्यते ॥ ३२६ ॥

दृढोन्नतकुचात्र या चपललोचना कामिनी
शशाङ्कवदनाम्बुजा मदनपीडिता यौवने ।
मनो हरति रूपतः सकलकामिनां वेगतो
न सैव जरसार्दिता भवति वल्लभा कस्यचित् ॥ ३२७ ॥

इमा यदि भवन्ति नो गलितयौवना नीरुच-
स्तदा कमललोचनास्तरुणमानिनी मामुचत् ।
विलासमदविभ्रमा भ्रमति लुण्टयित्री जरा
यतो भुवि बुधस्ततो भवति निस्पृहस्तन्मुखे ॥ ३२८ ॥

इमा रूपस्थानस्वजनतनयद्रव्यवनिता
सुता लक्ष्मीकीर्तिद्युतिरतिमतिप्रीतिधृतयः ।
मदान्धस्त्रीनेत्रप्रकृतिचपलाः सर्वमविना-
महोकष्टं मर्त्यस्तदपि विषयान्सेवितुमनाः ॥ ३२९ ॥

सहात्र स्त्री किंचित्सुतपरिजनैः प्रेम कुरुते
वशप्रासो भोगो भवति रतये किंचिदनघाः ।

श्रियः किंचित्तुष्टिं विदधति परां सौख्यजनिकां
न किंचित्पुंसां हि कतिपयदिनैरेतदखिलम् ॥ ३३० ॥
विजित्योर्वीं सर्वां सततमिह संसेव्य विषयां
श्रियं प्राप्यानर्घ्यां तनयमवलोक्यापि परमम् ।
निहन्त्यारातीनां वलय····मत्यन्तमरमं
विमुक्तद्रव्यो हि मुषितवदयं याति मरणम् ॥ ३३१ ॥
श्रियोपाया म्रातास्तृणजलचरं जीवितमिदं
मनश्चित्रं स्त्रीणां भुजगकुटिलं कामजसुखम् ।
क्षणध्वंसी कायः प्रकृतितरले यौवनधने
इति ज्ञात्वा सन्तः स्थिरतरधियः श्रेयसि रताः ॥ ३३२ ॥
गलत्यायुर्देहे व्रजति विलयं रूपमखिलं
जरा प्रत्यासन्नीभवति लभते व्याधिरुदयम् ।
कुटुम्बः स्नेहार्तः प्रतिहतमतिर्लोभकलितो
मनो जन्मोच्छित्त्यै तदपि कुरुते नायमसुमान् ॥ ३३३ ॥
बुधा ब्रह्मोत्कृष्टं परमसुखकृद्वाञ्छितपदं
विवेकश्चेदस्ति प्रतिहतमलः स्वान्तवसतौ ।
इदं लक्ष्मीभोगप्रभृति सकलं यस्य वसतो
न मोहग्रस्ते तन्मनसि विदुषां भावि सुखदम् ॥ ३३४ ॥
भवन्त्येता लक्ष्म्यः कतिपयदिनान्येव सुखदा-
स्तरुण्यस्तारुण्ये विदधति मनःप्रीतिमतुलाम् ।
तडिल्लोला भोगा वपुरपि चलं व्याधिकलितं
बुधाः संचिन्त्येति प्रगुणमनसो ब्रह्मणि रताः ॥ ३२५ ॥
न कान्ता कान्तान्ते विरहशिखिनो दीर्घनयना
न कान्ता भूपश्रीस्तडिदिव चला चान्तविरसा ।
न कान्तं ग्रस्तान्तं भवति जरसा यौवनमतः
श्रयन्ते ते सन्तः स्थिरसुखमयीं मुक्तिवनिताम् ॥ ३२६ ॥

वयं येभ्यो जाता मृतिमुपगतास्तेऽत्र सकलाः
समं यैः संवृद्धा ननु विरलतां तेऽपि गमिताः ।
इदानीमस्माकं मरणपरिपाटीक्रमकृता
न पश्यन्तोऽप्येवं विषयविरतिं यान्ति कृपणाः ॥ ३३७ ॥
स यातो यात्येष स्फुटमयमहो यास्यति मृतिं
परेषां यत्रैवं गणयति जनो नित्यमबुधः ।
महामोहाघ्रातस्तनुधनकलत्रादिविभवो
न मृत्युं स्वासन्नं व्यपगतमतिः पश्यति पुनः ॥ ३३८ ॥
सुखं प्राप्तुं बुद्धिर्यदि गतमलं मुक्तिवसतौ
हितं सेवध्वं भो जिनपतिमतं पूतरचितम् ।
भजध्वं मा तृष्णां कतिपयदिनस्थायिनि धने
यतो नायं सन्तः कमपि मृतमन्वेति विभवः ॥ ३३९ ॥
न संसारे किंचित्स्थिरमिह निजं वास्ति सकले
विमुच्यार्च्यं रत्नत्रितयमनघं मुक्तिजनकम् ।
अहो मोहार्तानां तदपि विरतिर्नास्ति भवत-
स्ततो मोक्षोपायाद्विमुखमनसां सौख्यकुशलम् ॥ ३४० ॥
अनित्यं निस्त्राणं जननमरणव्याधिकलितं
जगन्मिथ्यात्वधैरहमहमिकालिङ्गितमिदम् ।
विचिन्त्यैवं सन्तो विमलमनसो धर्ममतय-
स्तपः कर्तुं वृत्तास्तदपसृतये जैनमनघम् ॥ ३४१ ॥
तडिल्लोलं तृष्णाप्रचयनिपुणं सौख्यमखिलं
तृषो वृद्धेस्तापो दहति शमनो वह्निवदलम् ।
ततः खेदोऽत्यन्तं भवति भविनां चेतसि बुधा
निधायेदं पूते जिनपतिमते सन्ति निरताः ॥ ३४२ ॥

इति सामान्यानित्यतानिरूपणम् ॥ १३ ॥

यत्पाति हन्ति जनयति रजस्तमःसत्त्वगुणयुतं विश्वम् ।
तद्धरिशंकरविधिवद्विजयतु जगत्यां सदा कर्म ॥ ३४३ ॥

भवितव्यता विधाता कालो नियतिः पुरा कृतं कर्म ।
वेधा विधिस्वभावो भाग्यं दैवस्य नामानि ॥ ३४४ ॥
यत्सौख्यदुःखजनकं प्राणभृता संचितं पुरा कर्म ।
स्मरति पुनरिदानीं तद्दैवं मुनिभिराख्यातम् ॥ ३४५ ॥
दुःखं सुखं च लभ्येद्येन यतो यदा यथा यत्र ।
दैवनियोगात्प्राप्यं तत्तेन ततस्तदा तथा तत्र ॥ ३४६ ॥
यत्कर्म पुरा विहितं यातं जीवस्य पाकमिह किंचित् ।
न तदन्यथा विधातुं कथमपि शक्रोऽपि शक्नोति ॥ ३४७ ॥
धाता जनयति तावद्धलामभूतं नरं त्रिलोकस्य ।
यदि पुनरपि गतबुद्धिर्नाशयति किमस्य तत्कृत्यम् ॥ ३४८ ॥
निहितं यस्य मयूखैर्न तमः संतिष्ठते दिगन्तेऽपि ।
उपयाति सोऽपि नाशं नापदि किं तं विधिः स्पृशति ॥ ३४९ ॥
विपरीते सति धातरि साधनमफलं प्रजायते पुंसाम् ।
दशशतकरोऽपि भानुर्निपतति गगनादनवलम्बः ॥ ३५० ॥
यत्कुर्वन्नपि नित्यं कृत्यं पुरुषो न वाञ्छितं लभते ।
तत्रायशो विधातुर्मुनयो न वदन्ति देहभृतः ॥ ३५१ ॥
बान्धवमध्येऽपि जनो दुःखानि समेति पापपाकेन ।
पुण्येन वैरिसदनं यातोऽपि न मुच्यते सौख्यैः ॥ ३५२ ॥
पुरुषस्य भाग्यसमये पतितो वज्रोऽपि जायते कुसुमम् ।
कुसुममपि भाग्यविरहे वज्रादपि निष्ठुरं भवति ॥ ३५३ ॥
किं सुखदुःखनिमित्तं मनुजोऽयं खिद्यते गतमनस्कः ।
परिणमति विधिविनिर्मितमसुभाजां किं वितर्केण ॥ ३५४ ॥
दिशि विदिशि वियति शिखरिणि संयति गहने वनेऽपि यातानाम् ।
योजयति विधिरभीष्टं जन्मवतामभिमुखीभूतः ॥ ३५५ ॥
यदि नीतिमतां लक्ष्मीर्यदपथ्यनिषेविणां च कल्पत्वम् ।
अनुमीयते विधातुः स्वेच्छाकारित्वमेतेन ॥ ३५६ ॥

जलधिगतोऽपि न कश्चित्कश्चित्तटगोऽपि रत्नमुपयाति ।
पुण्यविपाकान्मर्त्यो मत्वेति विमुच्यतां खेदः ॥ ३५७ ॥
सुखमसुखं च विधत्ते जीवानां यत्र तत्र जातानाम् ।
कर्मैव पुरा चरितं कस्तच्छक्नोति वारयितुम् ॥ ३५८ ॥
द्वीपे चात्र समुद्रे धरणीधरमस्तके दिशामन्ते ।
पातं कूपेऽपि विधी रत्नं योजयति जन्मवताम् ॥ ३५९ ॥
विपदोऽपि पुण्यभाजां जायन्ते संपदोऽत्र जन्मवताम् ।
पापविपाकाद्विपदो जायन्ते संपदोऽपि सदा ॥ ३६० ॥
चित्रयति यन्मयूरान्हरितयति शुकान्बकान्सितीकुरुते ।
कर्मैव तत्करिष्यति सुखासुखं किं मनःखेदैः ॥ ३६१ ॥
अन्यत्कृत्यं मनुजश्चिन्तयति दिवानिशं विशुद्धधिया ।
वेधा विदधात्यन्यत्स्वामी च न शक्यते धर्तुम् ॥ ३६२ ॥
द्वीपे जलनिधिमध्ये गहनवने वैरिणां समूहेऽपि ।
रक्षति मर्त्यं सुकृतं पूर्वकृतं भृत्यवत्सततम् ॥ ३६३ ॥
नश्यतु यातु विदेशं प्रविशतु धरणीतलं खमुत्पततु ।
विदिशं दिशन्तु गच्छतु नो जीवस्त्यज्यते विधिना ॥ ३६४ ॥
शुभमशुभं च मनुष्यैर्यत्कर्म पुरार्जितं विपाकमितम् ।
तद्भोक्तव्यमवश्यं प्रतिषेद्धुं शक्यते केन ॥ ३६५ ॥
धनधान्यकोशनिचयाः सर्वे जीवस्य सुखकृतः सन्ति ।
भाग्येनेति विदित्वा विदुषा न विधीयते खेदः ॥ ३६६ ॥
दैवायत्तं सर्वं जीवस्य सुखासुखं त्रिलोकेऽपि ।
बुद्ध्वेति शुद्धधिषणाः कुर्वन्ति मनःक्षतिं नात्र ॥ ३६७ ॥
दातुं हर्तुं किंचित्सुखासुखं नेह कोऽपि शक्नोति ।
त्यक्त्वा कर्म पुरा कृतमिति मत्वा नो शुभं कृत्यम् ॥ ३६८ ॥
नरवरसुरवरविद्याधरेषु लोके न दृश्यते कोऽपि ।
शक्नोति यो निषेद्धुं भानोरिव कर्मणामुदयः ॥ ३६९ ॥

दयितजनेन वियोगं संयोगं खलजनेन जीवानाम् ।
सुखदुःखं च समस्तं विधिरेव निरङ्कुशः कुरुते ॥ ३७० ॥
अशुभोदये जनानां नश्यति बुद्धिर्न विद्यते रक्षा ।
सुहृदोऽपि सन्ति रिपवो विषमविषं जायते त्वमृतम् ॥ ३७१ ॥
नश्यति हस्तादर्थः पुण्यविहीनस्य देहिनो लोके ।
दूरादेत्य करस्थं भाग्ययुतो जायते रत्नम् ॥ ३७२ ॥
कस्यापि कोऽपि कुरुते न सुखं दुःखं च दैवमपहाय ।
विदधाति यथा गर्वं खलोऽहमहितस्य हन्तेति ॥ ३७३ ॥
गिरिपतिराजसानुमधिरोहतु यातु सुरेन्द्रमन्दिरं
विशतु समुद्रवारि धरणीतलमेकधिया प्रसर्पतु ।
गगनतलं प्रयातु विदधातु सुगुप्तमनेकधायुधै-
स्तदपि न पूर्वकर्म सततं बत मुञ्चत देहधारिणाम् ॥ ३७४ ॥

इति दैवनिरूपणम् ॥ १४ ॥

तावज्जल्पति सर्पति तिष्ठति माद्यति विलासति विभाति ।
यावन्नरो न जठरं देहभृतां जायते रिक्तम् ॥ ३७५ ॥
यद्यत्करिष्यति वातो निक्षिप्तद्रव्यनिर्गमद्वारम् ।
को नाम शक्यः कर्तुं जठरघटीपूरणं मर्त्यैः ॥ ३७६ ॥
शक्येतापि समुद्रः पूरयितुं निम्नगाशतसहस्रैः ।
नो शक्यते कदाचिज्जठरसमुद्रोऽन्नसलिलेन ॥ ३७७ ॥
वैश्वानरो न तृप्यति नानाविधकाष्ठनिचयतो यद्वत् ।
तद्वज्जठरहुताशो नो तृप्यति सर्वथाप्यशनैः ॥ ३७८ ॥
यस्यां वस्तु समस्तं न्यस्तं नाशाय कल्पते सततम् ।
दुष्पूरोदरपिठरी कस्तां शक्नोति पूरयितुम् ॥ ३७९ ॥
तावन्नरः कुलीनो मानी शूरः प्रजायतेऽत्यर्थम् ।
यावज्जठरपिशाचो वितनोति न पीडनं देहे ॥ ३८० ॥
यदि भवति जठरपिठरी नो मानविनाशका शरीरभृताम् ।
कः कस्य तदा दीनं जल्पति मानापहारेण ॥ ३८१ ॥

गायति नृत्यति वल्गति धावति पुरतो नृपस्य वेगेन ।
किं किं न करोति पुमानुदरग्रहपवनवशीभूतः ॥ ३८२ ॥
जीवान्निहन्त्यसत्यं जल्पति बहुधा परस्वमपहरति ।
यदकृत्यं तदपि जनो जठरानिलतापितस्तनुते ॥ ३८३ ॥
द्युतिगतिमतिरतिलक्ष्मीलता लसन्ति तनुधारिणां तावत् ।
यावज्जठरदवाग्निर्न ज्वलति शरीरकान्तारे ॥ ३८४ ॥
संसारतरणदक्षो विषयविरक्तो जरार्दितोऽप्यसुमान् ।
गर्वोद्ग्रीवं पश्यति सधनमुखं जठरनृपगदितः ॥ ३८५ ॥
कर्षति वपति लुनीते दीव्यति सीव्यति पुनाति वयते च ।
विदधाति किं न कृत्यं जठरानलशान्तये तनुमान् ॥ ३८६ ॥
लज्जामपहन्ति नृणां मानं नाशयति दैन्यमुपचिनोति ।
वर्धयति दुःखमखिलं जठरशिखी वर्धितो देहे ॥ ३८७ ॥
गुणकमलशशाङ्कतनुगर्वग्रहनाशने महामन्त्रम् ।
सुखकुमुदौघदिनेशो जठरशिखी बाधते किं न ॥ ३८८ ॥
शिथिलीभवति शरीरं दृष्टिर्भ्राम्यति विनाशमेति मतिः ।
मूर्च्छा भवति जनानामुदरभुजङ्गेन दष्टानाम् ॥ ३८९ ॥
उत्तमकुलेऽपि जातः सेवां विदधाति नीचलोकस्य ।
वदति न वाचां नीचामुदरेश्वरपीडितो मर्त्यः ॥ ३९० ॥
दासीभूय मनुष्यः परवेश्मसु नीचकर्म विदधाति ।
चाटुशतानि च कुरुते जठरदरीपूरणाकुलितः ॥ ३९१ ॥
क्रीणाति खलति याचति गणयति रचयति विचित्रशिल्पानि ।
जठरपिठरीं न शक्तः पूरयितुं गतशुभस्तदपि ॥ ३९२ ॥
प्रविशति वारिधिमध्यं संग्रामभुवं च गाहते विषमम् ।
लङ्घति सकलधरित्रीमुदरग्रहपीडितः प्राणी ॥ ३९३ ॥
कर्माणि यानि लोके दुःखनिमित्तानि लज्जनीयानि ।
सर्वाणि तानि कुरुते जठरनरेन्द्रस्य वशमितो जन्तुः ॥ ३९४ ॥

अर्थः कामो धर्मो मोक्षः सर्वे भवन्ति पुरुषस्य ।
तावद्यावत्पीडां जाठरवह्निर्न विदधाति ॥ ३९५ ॥
एवं सर्वजनानां दुःखकरं जठरविषममतिशिखिनम् ।
संतोषजलैरमलैः शमयन्ति यतीश्वरा ये ते ॥ ३९६ ॥
ज्वलितेऽपि जठरहुतभुजि कृतकारितमोदितैर्नवाहारैः ।
कुर्वन्ति जठरपूर्णं मुनिवृषभा ये नमस्तेभ्यः ॥ ३९७ ॥
तावत्कुरुते पापं जाठरवह्निर्न शाम्यते यावत् ।
धृतिवारिणा शमित्वा तं यतयः पापतो विरताः ॥ ३९८ ॥
श्रीमदमितगतिसौख्यं परमं परिहरति मानमपहन्ति ।
विरमति वृषतस्तनुमानुदरदरीपूरणाशक्तः ॥ ३९९ ॥
शुभसंतोषवारिपरिषेकबलेन यतिः सुदुःसहं
शमयति यः कृतान्तसमचेष्टितमुत्थितमौदरानलम् ।
व्रजति सरोगशोकमदमत्सरदुःखवियोगवर्जितं
विगलितमृत्युजननमपविघ्नमनर्घमनन्तमास्पदम् ॥ ४०० ॥

इति जठरनिरूपणम् ॥ १५ ॥

सर्पत्स्वान्तप्रसूतप्रतततमतमस्तोममस्तं समस्तं
सावित्रीव प्रदीप्तिर्नयति वितनुते पुण्यमन्यद्धिनस्ति ।
सूते संमोहमैत्रीद्युतिसुगतिमतिश्रीश्रिताकान्तिकीर्तिं
किं किं वा नो विधत्ते जिनपतिपदपो मुक्तिकर्त्री च दृष्टिः ॥ ४०१ ॥
शुश्रूषामाश्रयध्वं, बुधजनपदवीं याहि, कोपं विमुञ्च,
ज्ञानाभ्यासं कुरुष्व, त्यज विषयरिपुं, धर्ममित्रं भजात्मन् ।
निस्त्रिंशत्वं जहीहि, व्यसनविमुखतामेहि, नीतिं विधेहि,
श्रेयश्चेदस्ति पूतं परमसुखमयं लब्धुमिच्छास्तदोषम् ॥ ४०२ ॥
तारुण्योद्रेकरम्यां दृढकठिणकुचां पद्मपत्रायताक्षीं
स्थूलोपस्थां परस्त्रीं किमिति शशिमुखीं वीक्ष्य खेदं प्रयासि ।
त्यक्त्वा सर्वान्यकृत्यं कुरु सुकृतमहो कान्तमूर्त्यङ्गनानां
वाञ्छा चेत्ते हतात्मन्न हि सुकृतमृते वाञ्छितावाप्तिरस्ति ॥ ४०३ ॥

लक्ष्मीं प्राप्याप्यनर्घ्यामखिलपरजनप्रीतिपुष्टिप्रदात्रीं
कान्तां कान्ताङ्गयष्टिं विकसितवदनां चिन्तयस्यार्तचित्तः ।
तस्याः पुत्रं पवित्रं प्रथितपृथुगुणं तस्य भार्यां च तस्याः
पुत्रं तस्यापि कान्तामिति विहितमतिः खिद्यते जीवमूढः ॥४०४॥

जन्मक्षेत्रे पवित्रे क्षणरुचिचपले दोषसर्पोरुरन्ध्रे
देहे व्याधादिसिन्धुप्रपतनजलधौ पापपानीयकुम्भे ।
कुर्वाणो बन्धुबुद्धिं विविधमलभृते यासि रे जीव नाशं
संचिन्त्यैवं शरीरे कुरु हत ममतो धर्मकर्माणि नित्यम् ॥ ४०५ ॥

यद्वच्चित्तं करोषि स्मरशरनिहतः कामिनीसङ्गसौख्ये
तद्वत्त्वं चेज्जिनेन्द्रप्रणिगदितमते मुक्तिमार्गे विदध्याः ।
किं किं सौख्यं न यासि प्रगतनवजरामृत्युदुःखप्रपञ्चं
संचिन्त्यैवं विधिस्त्वं स्थिरपरमधिया तत्र चित्त स्थिरस्त्वम्॥४०६॥

सद्यः पातालमेति प्रविशति जलधिं गाहते देवगर्भं
भुङ्क्ते भोगान्नराणाममरयुवतिभिः संगमं याचते च ।
वाञ्छत्यैश्वर्यमार्यं रिपुसमिति हतेः कीर्तिकान्तां ततश्च
धृत्वा त्वं जीव चित्तं स्थिरमतिचपलं स्वस्य कृत्यं कुरुष्व ॥४०७॥

नो शक्यं यन्निषेद्धुं त्रिभुवनभवनप्राङ्गणे वर्तमानं
सर्वे नश्यन्ति दोषा भवभयजनका रोधतो यस्य पुंसाम् ।
जीवाजीवादितत्त्वप्रकटननिपुणे जैनवाक्ये निवेश्य
तत्त्वे चेतो विदध्याः स्ववशसुखप्रदं स्वं तदा त्वं प्रयासि॥४०८॥

मित्रत्वं याति शत्रुः कथमपि सुकृतां नापहर्तुं समर्थो
जन्मन्येकत्र दुःखं जनयति भविनां शक्यते चापघातम् ।
नैवं भोगोऽथ वैरी मृतजननजरादुःखतो जीव शश्व-
त्तस्मादेनं निहत्य प्रशमशितशरैर्मुक्तिभोगं भज त्वम् ॥ ४०९ ॥

रे जीव त्वं विमुञ्च क्षणरुचिचपलानिन्द्रियार्थोपभोगा-
नेभिर्दुःखं न नीतः किमिह भववनेऽत्यन्तरौद्रे हतात्मन् ।

तृष्णां चेत्तेन तेभ्यो विरमति विमतेऽद्यापि पामात्मकेभ्यः
संसारात्यन्तदुःखान्कथमपि न तदा मुग्ध मुक्तिं प्रयासि ॥ ४१० ॥
मत्तस्त्रीनेत्रलोलाद्विरमति च सुखाद्योषितानन्तदुःखा-
त्प्राज्ञोप्रेक्षातितिक्षामतिधृतिकरुणामित्रताश्रीगृहांश्च ।
एतांस्तारुण्यरम्या नहि तरलदृशो मोदयित्वा तरुण्यो
दुःखात्पातुं समर्था नरकगतिमितानङ्गिनो जीव जातु ॥ ४११ ॥
दृष्ट्वा लक्ष्मीं परेषां किमिति हतमते खेदमन्तःकरोषि
नैषा नैतेन च त्वं कतिपयदिवसैर्गत्वरं येन सर्वम् ।
तत्त्वं धर्मं विधेहि स्थिरविशदधिया जीव मुक्त्वान्यवाञ्छां
येन प्रध्वस्तबाधां विततसुखमयीं मुक्तिलक्ष्मीमुपैषि ॥ ४१२ ॥
भोगा नश्यन्ति कालात्स्वयमपि न गुणो जायते तत्र कोऽपि
तज्जीवैतान्विमुञ्च व्यसनभयकरानात्मना धर्मबुध्या ।
स्वातन्त्र्याद्येन याता विदधति मनसस्तापमत्यन्तमुग्रं
तन्वन्त्येते नु मुक्ताः स्वयमसमसुखं स्वात्मजं नित्यमर्च्यम् ॥ ४१३ ॥
धर्मे चित्तं निधेहि, श्रुतकथितविधिं जीव भक्त्या विधेहि,
सम्यक्स्वान्तं पुनीहि, व्यसनकुसुमितं कामवृक्षं लुनीहि, ।
पापे बुद्धिं धुनीहि, प्रशमयमदमाञ्शिण्ढि, पिण्ढि प्रमादं,
छिन्धि क्रोधं, विभिन्धि प्रचुरमदगिरिस्तेऽस्ति चेन्मुक्तिवाञ्छा ४१४
बाधा व्याधा च कीर्णे विपुलभववने भ्राम्यता संचितानि
दग्ध्वा कर्मेन्धनानि ज्वलितशिखिवदत्यन्तदुःखप्रदानि ।
यद्वत्ते नित्यसौख्यं व्यपगतविपदं जीवमोक्षं समीक्ष्य
बाह्यान्तर्ग्रन्थमुक्ते तपसि जिनमते तत्र तोषं कुरुष्व ॥ ४१५ ॥
एको मे शाश्वतात्मा सुखमसुखभुजो ज्ञानदृष्टिस्वभावो
नान्यत्किंचिन्निजं मे तनुधनकरणभ्रातृभार्यासुखादि ।
कर्मोद्भूतं समस्तं चपलमसुखदं तत्र मोहो मुधा मे
पर्यालोच्येति जीव स्वहितमवितथं मुक्तिमार्गं श्रय त्वम् ॥ ४१६ ॥

ये बुध्यन्तेऽत्र तत्वं न प्रकृतिचपलं तेऽपि शक्ता निरोद्धुं
प्रोद्यत्कल्पान्तवातक्षुभितजलनिधिस्फीतवीचिस्पदो वा ।
प्रागेवान्ये मनुष्यास्तरलतरमनोवृत्तयो दृष्टनष्टा-
स्तच्चेतश्च दृगेतत्स्थिरपरमसुखं त्वं तदा किं न यासि ॥ ४१७ ॥

रे पापिष्ठातिदुष्टव्यसनगतमते निन्द्यकर्मप्रशक्त
न्यायान्यायानभिज्ञ प्रतिहतकरुण व्यस्तसन्मार्गबुद्धे ।
किं किं दुःखं न यातो विनयवशगतो येन जीवो विषह्य
त्वं तेनैनोऽतिवर्त्य प्रसभमिह मनो जैनतत्त्वे निधेहि ॥ ४१८ ॥

लज्जादीनात्मशत्रो कुमतगतमते त्यक्ततत्वप्रणीते
स्विष्टानुष्ठाननिष्टस्थिरमदनरते मुक्तिमार्गप्रवृत्ते ।
संसारे दुःखमुग्रं सुखरहितगताविन्द्रियैः प्रापितो यै-
स्तेषामद्यापि जीव व्रजसि गतघृण ध्वस्तबुद्धे वशित्वम् ॥ ४१९ ॥

सर्पव्याघ्रेभवैरिज्वलनविषयमग्राहशत्रुगृहाद्या-
न्हित्वा दुष्टस्वरूपान्ददति तनुभृतां ये व्यथां सर्वतोऽपि ।
तान्कोपादीन्निकृष्टानतिविषमरिपून्निर्जय त्वं प्रवीणा-
न्रे रे जीव प्रलीनप्रशमगतिमते दग्धभग्नस्वशत्रो ॥ ४२० ॥

मैत्री सत्त्वेषु मोदं गुणवति करुणं क्लेशिते देहभाजि
मध्यस्थत्वं प्रतीपे जिनवचसि रतिं निग्रहं क्रोधयोधे ।
अक्षार्थेभ्यो निवृत्तिं मृतिजननभवाद्भीतिमत्यन्तदुःखा-
द्रे जीव त्वं विधत्स्व च्युतनिखिलमले मोक्षसौख्येऽभिलाषम् ४२१

कर्मानिष्टं विधत्ते भवति परवशो लज्जते नो जनानां
धर्माधर्मौ व वेत्ति त्यजति गुरुकुलं सेवते नीचलोकम् ।
भूत्वा प्राज्ञः कुलीनः प्रथितपृथुगुणो माननीयो बुधोऽपि
ग्रस्तो येनात्र देहीनुदमदनरिपुं जीव तं दुःखदक्षम् ॥ ४२२ ॥

रागोद्युक्तोऽपि देवोत्तरतदितरजग्रन्थशक्तोऽपि साधु-
जीवध्वंसोऽपि धर्मस्तनुविभवसुखं स्थाण्णु मे सर्वदेति ।

संसारापातहेतुं मतिगतिदुरतं कार्यते येन जीव-
स्तं मोहं मर्दय त्वं यदि सुखमतुलं वाञ्छसि त्यक्तबाधम्॥४२३॥
तीव्रत्रासप्रदायिप्रभवमृतिजराश्वापदव्राजपाते
दुःखोर्वीजप्रपञ्चे भवगहनवनेऽनेकयोऽन्यद्भिरौद्रे ।
भ्राम्यन्न प्रापि नृत्वं कथमपि शमतः कर्मणो दुष्कृतस्य
नो चेद्धर्मं करोषि स्थिरपरमधिया वञ्चितस्त्वं तदात्मन् ॥ ४२४॥
ज्ञानं तेऽघप्रबोधो जिनवचनरुचिर्दर्शनं धूतदोषं
चारित्रं पापमुक्तं त्रयमिदमुदितं मुक्तिहेतुं प्रधत्स्व ।
मुक्त्वा संसारहेतुस्त्रितयमपि परं निन्द्यबोधाद्यवद्यं
रे रे जीवात्मवैरिन्नमितगतिसुखे चेत्तवेच्छास्ति पूते ॥ ४२५ ॥

इति जीवसंबोधननिरूपणम् ॥ १६ ॥

पापं वर्धयते, चिनोति कुमतिं, कीर्त्यङ्गनां नश्यति,
धर्मं ध्वंसयति, तनोति विपदं, संपत्तिमुन्मर्दति, ।
नीतिं हन्ति, विनीतिमत्र कुरुते, कोपं धुनीते समं,
किंवा दुर्जनसंगतिर्न कुरुते लोकद्वयध्वंसिनी ॥ ४२६ ॥
न व्याघ्रः क्षुधयातुरोऽपि कुपितो, नाशीविषः पन्नगो,
नारातिर्बलसत्वबुद्धिकलितो मत्तः करीन्द्रो न च ।
तं शक्नोति न कर्तुमत्र नृपतिः कण्ठीरवो नोद्धुरो
दोषं दुर्जनसङ्गतिर्वितनुते यं देहिनां निन्दिता ॥ ४२७ ॥
व्याधव्यालभुजङ्गसंगभयकृत्कक्षं वरं सेवितं
कल्पान्तोद्धतभीमवीचिनिचितो वार्द्धिर्वरं गाहितः ।
विश्वप्लोषकरोद्धतोज्वलशिखो वह्निर्वरं चाश्रित-
स्त्रैलोक्योदरवर्तिदोषजनकेनासाधुमध्ये स्थितम् ॥ ४२८ ॥
वाक्यं जल्पति कोमलं सुखकरं कृत्यं करोत्यन्यथा
वक्रत्वं न जहातु जातु मनसा सर्पो यथा दुष्टधीः ।
नो भूतिं सहते परस्य न गुणं जानाति कोपाकुलो
यस्तं लोकविनिन्दितं खलजनं कः सत्तमः सेवते ॥ ४२९ ॥

नीचोच्चादिविवेकनाशकुशलो बाधाकरो देहिना-
माशाभोगनिरासनो मलिनताच्छन्नात्मनां वल्लभः ।
सद्दृष्टिप्रसरावरोधनपटुर्मित्रप्रतापाहतः
कृत्याकृत्यविदा प्रदोषसदृशो वर्ज्यः सदा दुर्जनः ॥ ४३० ॥

ध्वान्तध्वंसपरः कलङ्कितनुर्वृद्धिक्षयोत्पादकः
पद्माशी कुमुदप्रकाशनिपुणो दोषाकरो यो जडः ।
कामोद्वेगरसः समस्तभविनां लोके निशानाथव-
त्कस्तं नाम जनो महासुखकरं जानाति नो दुर्जनम् ॥४३१॥

दुष्टो यो विदधाति दुःखमपरं पश्यत्सुखेनान्वितं
दृष्ट्वा तस्य विभूतिमस्तधिषणो हेतुं विना कुप्यति ।
वाक्यं जल्पति किंचिदाकुलमना दुःखावहं यन्नृणां
तस्माद्दुर्जनतो विशुद्धमतयः काण्ड्याद्यथा बिभ्यति ॥ ४३२ ॥

यस्त्यक्त्वा गुणसंहतिं वितनुते गृह्णाति दोषान्परे
दोषानेव करोति जातु न गुणं त्रेधास्त्वयं दुष्टधीः ।
युक्तायुक्तविचारणाविरहितो विध्वस्तधर्मक्रियो
लोकानन्दिगुणोऽपि कोऽपि न खलं शक्नोति संबोधितुम्४३३

दोषेषु स्वयमेव दुष्टधिषणो यो वर्तमानः सदा
तत्रान्यानपि मन्यते स्थितिवतस्त्रैलोक्यवर्त्यङ्गिनाम् ।
कृत्यं निन्दितमातनोति वचनं यो दुःश्रवं जल्पति
चापारोपितमार्गणादिव खलात्सन्तस्ततो बिभ्यति ॥ ४३४ ॥

योऽन्येषां भषणोद्यतः श्वशिशुवच्छिद्रेक्षणः सर्पव-
दग्राह्यः परमाणुवन्मुरजवद्वक्त्रद्वयेनान्वितः ।
नानारूपसमन्वितः शरदवद्वक्रो भुजङ्गेशव-
त्कस्यासौ न करोति दोषनिलयश्चित्तव्यथां दुर्जनः ॥ ४३५ ॥

गाढं श्लिष्यति दूरतोऽपि कुरुतेऽभ्युत्थानमार्द्रेक्षणो
दत्तेऽर्धासनमातनोति मधुरं वाक्यं प्रसन्नाननः ।

चिन्तान्तर्गतवञ्चनो विनयवान्मिथ्यावधिर्दुष्टधी-
यों दुःखामृतभर्मणा विषमयो मन्ये कृतो दुर्जनः ॥ ४३६ ॥
यद्वच्चन्दनसंभवोऽपि दहनो दाहात्मकः सर्वदा
संपन्नोऽपि समुद्रवारिणि यथा प्राणान्तको डुण्डुभिः।
दिव्याहारसमुद्भवोऽपि भवति व्याधिर्यथा बाधक-
स्तद्वद्दुःखकरः खलस्तनुमतां जातः कुलेऽप्युत्तमे ॥ ४३७ ॥
लब्धं जन्म यतो यतः पृथुगुणा जीवन्ति यत्राश्रिता
ये तत्रापि जने वने फलवति प्लोषं पुलिन्दा इव।
निस्त्रिंशा वितरन्ति धूतमतयः शश्वत्खलाः पापिन-
स्ते मुञ्चन्ति कथं विचाररहिता जीवन्तमन्यं जनम् ॥ ४३८ ॥
यत्साधूदितमन्त्रगोचरमतिक्रान्तो द्विजिह्वाननः
क्रुद्धो रक्तविलोचनोऽसिततमो मुञ्चत्यवाच्याविषम्।
रौद्रो दृष्टिविषो विभीषितजनो रन्ध्रावलोकोदितः
कस्तं दुर्जनपन्नगं कुटिलगं शक्नोति कर्तुं वशम् ॥ ४३९ ॥
नो निर्धूतविषं पिबन्नपि पयः संपद्यते पन्नगो
निम्बाङ्गः कटुतां पयोमधुघटैः सिक्तोऽपि नो मुञ्चति।
नोशीरैरपि सर्वदा विलसितं धान्यं ददात्यूषरं
नैवं मुञ्चति वक्रतां खलजनः संसेवितोऽप्युत्तमैः ॥ ४४० ॥
वैरं यः कुरुते निमित्तरहितो मिथ्यावचो भाषते
नीचोक्तं वचनं शृणोति सहते स्तौति स्वमन्यं जनम्।
नित्यं निन्दति गर्वितोऽभिभवति स्पर्धां तनोत्यूर्जिता-
मेवं दुर्जनमस्तशुद्धधिषणं सन्तो वदन्त्यङ्गिनाम् ॥ ४४१ ॥
भानोः शीतमतिग्मगोरहितता शृङ्गात्पयोऽधेनुतः
पीयूषं विषतोऽमृताद्विषलता शुक्लत्वमङ्गारतः।
वह्नेर्वारि ततोऽनिलः सुरसजं निम्बाद्भवेज्जातुचि-
न्नो वाक्यं महितं सतां हतमतेरुत्पद्यते दुर्जनात् ॥ ४४२ ॥

सत्या (?) यो निरुजं वदन्ति यमनो दम्भं शुचेर्धूर्तता
लज्जालोर्जडतां पटोर्मुखरतां तेजस्विनो गर्वताम् ।
शान्तस्याक्षमतामृजोरमतितां धर्मार्थिनो मूर्खता-
मित्येवं गुणिनां गुणास्त्रिभुवने ना दूषितो दुर्जनैः ॥ ४४३ ॥

प्रत्युत्थाति समेति नौति नमति प्रह्लादते सेवते
भुङ्क्ते भोजयते धिनोति वचनैर्गृह्णाति दत्ते पुनः ।
अङ्गं श्लिष्यति संतनोति वदनं विस्फारितार्द्रेक्षणं
चित्तारोपितवक्रिमोऽनुकुरुते कृत्यं यदिष्टं खलः ॥ ४४४ ॥

सर्वोद्वेगविचक्षणाः प्रचुररुग्मुञ्चन्नवाच्यं विषं
प्राणाकर्षपदोपदेशकुटिलस्वान्तो द्विजिह्वान्वितः ।
भीमभ्रान्तविलोचनोऽसमगतिः शश्वद्दयावर्जित-
श्छिद्रान्वेषणतत्परो भुजगवद्वर्ज्यो बुधैर्दुर्जनः ॥ ४४५ ॥

धर्माधर्मविचारणाविरहिताः सन्मार्गविद्वेषिणो
निन्द्याचारविधौ समुद्यतधियः स्वार्थैकनिष्ठापराः ।
दुःखोत्पादकवाक्यभाषणरताः सर्वाप्रशंसाकरा
द्रष्टव्या अपरिग्रहव्रतिसमा विद्वज्जनैर्दुर्जनाः ॥ ४४६ ॥

मानं मार्दवतः क्रुधं प्रशमतो लोभं तु संतोषतो
मायामार्जवतोजनीमवमतेर्जिह्वाजयान्मन्मथम् ।
ध्वान्तं भास्करतोऽनलं सलिलतो मन्त्रात्समीराशनं
नेतुं शान्तिमलं कुतोऽपि न खलं मर्त्यो निमित्ताद्भुवि ॥ ४४७ ॥

वीक्ष्यात्मीयगुणैर्मृणालधवलैर्यद्वर्धमानं जनं
राहुर्वा[1] सितदीधितिं सुखकरैरानन्दयन्तं जगत् ।
नो नीचः सहते निमित्तरहितो न्यक्कारबद्धः स्पृहः
किंचिन्नात्र तदद्भुतं खलजने येन वृकेव स्थितिः ॥ ४४८ ॥

त्यक्त्वा मौक्तिकसंहतिं करटिनो गृह्णन्ति काकाः पलं
त्यक्त्वा चन्दनमाश्रयन्ति कुपितेभ्योऽतिक्षयं मक्षिकाः ।

---

१. इवार्थे वाशब्दः.

हित्वान्नं विविधं मनोहररसं श्वानो मलं भुञ्जते
यद्वद्गृह्णाति गुणं विहाय सततं दोषं तथा दुर्जनाः ॥ ४४९ ॥

इति दुर्जननिरूपणम् ॥ १७ ॥

ये जल्पन्ति व्यसनविमुखां भारतीमस्तदोषां
ये श्रीनीतिद्युतिमतिधृतिप्रीतिशान्तीर्ददन्ते ।
येभ्यः कीर्तिर्विगलितमला जायते जन्मभाजां
शश्वत्सन्तः कलिलहतये ते नरेणात्र सेव्याः ॥ ४५० ॥

नैतच्छ्यामा चकितहरिणीलोचना कीरनाशा
मृद्वालापा कमलवदना पक्वबिम्बाधरोष्ठी ।
मध्ये क्षामा विपुलजघना कामिनी कान्तरूपा
यन्निर्दोषं वितरति सुखं संगतिः सज्जनानाम् ॥ ४५१ ॥

यो नाक्षिप्य प्रवदति कथां नाभ्यसूयां विधत्ते
न स्तौति स्वं हसति न परं वक्ति नान्यस्य मर्म ।
हन्ति क्रोधं स्थिरयति शमं प्रीतितो न व्ययीनि
सन्तः सन्तं व्यपगतमदं तं सदा वर्णयन्ति ॥ ४५२ ॥

धृत्वा धृत्वा ददति तरवः सप्रणामं फलानि
प्राप्तं प्राप्तं भुवनभृतये वारि वार्दाः क्षिपन्ति ।
हत्वा हत्वा वितरति हरिर्दन्तिनः सश्रुतेभ्यो
भो साधूनां भवति भवने कोऽप्यपूर्वोऽत्र पन्थाः ॥ ४५३ ॥

वार्धेश्चन्द्रः किमिह कुरुते नाकिमार्गस्थितोऽपि
वृद्धौ वृद्धिं श्रयति यदयं तस्य हानौ च हानिम् ।
अज्ञातो वा भवति महतः कोऽप्यपूर्वस्वभावो
देहेनापि व्रजति तनुतां येन दृष्ट्वान्यदुःखम् ॥ ४५४ ॥

सत्यां वाचं वदति कुरुते नात्मशंसान्यनिन्दे
नो मात्सर्यं श्रयति तनुते तापकारं परेषाम् ।
नो शप्तोऽपि व्रजति विकृतिं नैति मन्युं कदाचि-
त्केनाप्येतन्निगदितमहो चेष्टितं सज्जनस्य ॥ ४५५ ॥

नश्यत्तन्द्रो भुवनभवतोऽद्भूततत्त्वप्रदर्शी
सम्यङ्मार्गप्रकटनपरो ध्वस्तदोषाकरश्रीः ।
पुष्यत्पद्मो गलिततिमिरो दत्तमित्रप्रतापो
राजत्तेजा दिवससदृशः सज्जनो भाति लोके ॥ ४५६ ॥

ये कारुण्यं विदधति जने सापकारेऽनपेक्षा
मान्याचारा जगति विरला मण्डनं ते धरित्र्याः ।
ये कुर्वन्ति ध्रुवमुपकृतिं स्वस्वकृत्यप्रसिद्धौ
मर्त्याः सन्ति प्रतिगृहममी काश्यपीभारभूताः ॥ ४५७ ॥

सम्यग्धर्मव्यवसितपरः पापविध्वंसदक्षो
मित्रामित्रस्थिरसममनाः सौख्यदुःखैकचेताः ।
ज्ञानाभ्यासात्प्रशमितमदक्रोधलोभप्रपञ्चः
सद्वृत्ताढ्यो मुनिरिव जनो सज्जनो राजतेऽत्र ॥ ४५८ ॥

यः प्रोत्तुङ्गः परमगरिमास्थैर्यवान्वा नगेन्द्रः
पद्मानन्दी विहितजडिमो भानुवद्धूतदोषः ।
शीतः सोमोऽमृतमयवपुश्चन्द्रवद्ध्वान्तघाती
पूज्याचारो जगति सुजनो भात्यसौ ख्यातकीर्तिः ॥ ४५९ ॥

तृष्णा चित्ते शमयति मदं ज्ञानमाविष्करोति
नीतिं सूते हरति विपदं संपदं संचिनोति ।
पुंसां लोकद्वितयशुभदा संगतिः सज्जनानां
किं वा कुर्यान्न फलममलं दुःखनिर्नाशदक्षाः ॥ ४६० ॥

चित्ताह्लादि व्यसनविमुखः शोकतापापनोदि
प्रज्ञोत्पादि श्रवणसुभगं न्यायमार्गानुयायि ।
तथ्यं पथ्यं व्यपगतमलं सार्थकं मुक्तबाधं
यो निर्दोषं रचयति वचस्तं बुधाः सन्तमाहुः ॥ ४६१ ॥

कोपो विद्युत्स्फुरति तरलो ग्रावरेखेव मैत्री
मेरुस्थैर्यं चरतमचलः सर्वजन्तूपचारः ।

बुद्धिर्धर्मग्रहणचतुरा वाक्यमस्तोपपातं
किं पर्याप्तं न सुजनगुणैरेभिरेवात्र लोके ॥ ४६२ ॥

जातु स्थैर्याद्विचलयति गिरिः शीततां याति वह्नि-
र्यादोनाथः स्थितिविरहितो मारुतः स्तम्भमेति ।
तीव्रश्चन्द्रो भवति दिनपो जायते चाप्रतापः
कल्पान्तेऽपि व्रजति विकृतिं सज्जनो न स्वभावात् ॥ ४६३ ॥

वृत्तत्यागं विदधति न ये नान्यदोषं वहन्ते
नो याचन्ते सुहृदमधनं नाशतो नापि दीनम् ।
नो सेवन्ते विगतचरितं कुर्वते नाभिभूतं
नो लङ्घन्ते क्रमममलिनं सज्जनास्ते भवन्ति ॥ ४६४ ॥

मातृस्वामिस्वजनजनकभ्रातृभार्याजनाद्या
दातुं शक्तास्तदिह न फलं सज्जना यद्ददन्ते ।
काचित्तेषां वचनरचना येन सा ध्वस्तदोषा
यां शृण्वन्तः शमितकलुषा निर्वृतिं यान्ति सत्त्वाः ॥ ४६५ ॥

नित्यच्छायाफलभरनताः प्रीणितप्राणिसार्थाः
क्षिप्त्वा प्रेक्षामुपकृतिकृतो दत्तसत्त्वावकाशाः ।
शश्वत्तुङ्गा विपुलसुमनोभ्राजिनो लङ्घनीयाः
प्रीतिमन्तः स्थिरतरधियो वृक्षवद्वर्धयन्ति ॥ ४६६ ॥

मुक्त्वा सार्थं सकृपहृदयाः कुर्वते ये परार्थं
ये निर्व्याजां विजितकलुषां तन्वते धर्मबुद्धिम् ।
ये निर्गर्वा विदधति हितं गृह्णते नापवादं
ते पुंनागा जगति विरलाः पुण्यवन्तो भवन्ति ॥ ४६७ ॥

हन्ति ध्वान्तं हरयति रजः सत्त्वमाविष्करोति
प्रज्ञां सूते वितरति सुखं न्यायवृत्तिं तनोति ।
धर्मे बुद्धिं रचयतितरां पापबुद्धिं धुनीते
पुंसां नो वा किमिह कुरुते संगतिः सज्जनानाम् ॥ ४६८ ॥

अस्यत्युच्चैः शकलितवपुश्चन्दनो नात्मगन्धं
नेक्षुर्यन्त्रैरपि मधुरतां पीड्यमानो जहाति।
यद्वत्स्वर्णं न चलति हितं छिन्नघृष्टोपतप्तं
तद्वत्साधुः कुजननिहतोऽप्यन्यथात्वं न याति ॥ ४६९ ॥

यद्वद्भानुर्वितरति करैर्मोदमम्भोरुहाणां
शीतज्योतिः सरिदधिपतिं लब्धवृद्धिं विदत्ते।
वार्दो[1] लोकानुदकविसरैस्तर्पयत्यस्तहेतु-
स्तद्वद्दोषं रचयति गुणैः सज्जनः प्राणभाजाम् ॥ ४७० ॥

देवा धौतक्रमसरसिजाः सौख्यदाः सर्वलोके
पृथ्वीपालाः प्रददति धनं कालतः सेव्यमानाः।
कीर्तिः प्रीतिप्रशमपटुता पूज्यता तत्त्वबोधा
संपद्यन्ते झटिति कृतिनश्चैव पुंसः श्रितस्य ॥ ४७१ ॥

यद्वद्वाचः प्रकृतिसुभगाः सज्जनानां प्रसूताः
शोकक्रोधप्रभृतिजवपुस्तापविध्वंसदक्षाः।
पुंसां सौख्यं विदधतितरां शीतलाः सर्वकालं
तद्वच्छीतद्युतिरुचिलवानमृतस्यन्दिनोऽपि ॥ ४७२ ॥

आक्रुष्टोऽपि व्रजति न रुषं भाषते नापभाष्यं
नो कुष्टोऽपि प्रवहति मदं शौर्यधैर्यादिधर्मैः।
यो यातोऽपि व्यसनमनिशं कातरत्वं न याति
सन्तः प्राहुस्तमिह सुजनं तत्त्वबुध्या विवेच्य ॥ ४७३ ॥

इति सज्जननिरूपणम् ॥ १८ ॥

तुष्टिश्रद्धाविनयभजना लुब्धता क्षान्तिसत्त्व-
प्राणत्राणव्यवसितगुणज्ञानकालज्ञताढ्यः।
दानाशक्तिर्जननमृतिभिश्चास्तिको मत्सरेर्ष्यो
दक्षात्मा यो भवति स नरो दातृमुख्यो जिनोक्तः ॥ ४७४ ॥

---

१. मेघः.

कालेऽन्नस्य क्षुधमवहितो दित्समानो विधृत्य
नो भोक्तव्यं प्रथममतिथेर्यः सदा तिष्ठतीति।
तस्याप्राप्तावपि गतमलं पुण्यराशिं श्रयन्तं
तं दातारं जिनपतिमते मुख्यमाहुर्जिनेन्द्राः॥ ४७५॥
सर्वाभीष्टा बुधजननुता धर्मकामार्थमोक्षाः
सत्सौख्यानां वितरणपरा दुःखविध्वंसदक्षाः।
लब्धुं शक्या जगति नयतो जीवितव्यं विनैव
तद्दानेन ध्रुवमसुभृतां किं न दत्तं ततोऽत्र॥ ४७६॥
कृत्याकृत्ये कलयति यतः कामकोपौ लुनीते
धर्मे श्रद्धां रचयति परां पापबुद्धिं धुनीते।
अक्षार्थेभ्यो विरमति रजो हन्ति चित्तं पुनीते
तद्दातव्यं भवति विदुषा शास्त्रमत्र व्रतिभ्यः॥ ४७७॥
भार्याभ्रातृस्वजनतनयान्यन्निमित्तं त्यजन्ति
प्रज्ञासत्त्वव्रतसमितयो यद्विना यान्ति नाशम्।
क्षुद्दुःखेन ग्लपितवपुषो भुञ्जते च त्वभक्ष्यं
तद्दातव्यं भवति विदुषा संयतायान्नशुद्धम्॥ ४७८॥
सम्यग्विद्याशमदमतपोध्यानमौनव्रताढ्यं
श्रेयोहेतुर्गतरुजि तनौ जायते येन सर्वम्।
तत्साधूनां व्यथितवपुषां तीव्ररोगप्रपञ्चै-
स्तद्रक्षार्थं वितरत जनाः प्राशुकान्यौषधानि॥ ४७९॥
सावद्यत्वान्महदपि फलं नो विधातुं समर्थं
कन्यास्वर्णद्विपहयधरागोमहिष्यादिदानम्।
त्यक्त्वा दद्याज्जिनमतदयाभेषजाहारदानं
भूत्वाप्यल्पं विपुलफलदं दोषमुक्तं वियुक्तम्॥ ४८०॥
नीतिंश्रीतिश्रुतिमतिधृतिज्योतिभक्तिप्रतीति-
प्रीतिज्ञातिस्मृतिरतियतिख्यातिशक्तिप्रगीतिः।

यस्माद्देही जगति लभते नो विना भोजनेन
तस्माद्दानं स्युरिह ददता ताः समस्ताः प्रशस्ताः ॥ ४८१ ॥
दर्पोद्रेकव्यसनमथनक्रोधयुद्धप्रबाधा-
पापारम्भक्षितिहतधियां जायते यन्निमित्तम् ।
यत्संगृह्य श्रयति विषयान्दुःखितं यत्स्वयं स्या-
द्यद्दुःखाद्यं प्रभवति न तच्छ्लाघ्यतेऽत्र प्रदेयम् ॥ ४८२ ॥
साधू रत्नत्रितयनिरतो जायते निर्जिताक्षो
धर्मं दत्ते व्यपगतमलं सर्वकल्याणमूलम् ।
रागद्वेषप्रभृति मथनं यद्गृहीत्वा विधत्ते
तद्दातव्यं भवति विदुषा देयमिष्टं तदेव ॥ ४८३ ॥
धर्मध्यानव्रतसमितिभृत्संयतश्चारु पात्रं
व्यावृत्तात्मात्र सहननतः श्रावको मध्यमं तु ।
सम्यग्दृष्टिर्व्रतविरहितः श्रावकः स्याज्जघन्य-
मेव त्रेधा जिनपतिमते पात्रमाहुः श्रुतज्ञाः ॥ ४८४ ॥
यो जीवानां जनकसदृशः सत्यवाग्दत्तभोजी
सप्रेमस्त्रीनयनविशिखाभिन्नचित्तः स्थिरात्मा ।
द्वेधा ग्रन्थादुपरममनाः सर्वथा निर्जिताक्षो
दातुं पात्रं व्रतपतिममुं वर्यमाहुर्जिनेन्द्राः ॥ ४८५ ॥
यद्वत्तोयं निपतति घनादेकरूपं रसेन
प्राप्याधारं सगुणमगुणं याति नानाविधत्वम् ।
तद्वद्दानं सफलमफलं प्राप्यमप्येति मत्वा
देयं दानं समयमभृतां संयतानां यतीनाम् ॥ ४८६ ॥
यद्वत्क्षिप्तं गलति सकलं छिद्रयुक्ते घटेऽम्भ-
स्तिक्तालाबूनिहितमहितं जायते दुग्धमद्यम् ।
आमामत्रे रचयति भिदां तस्य नाशं च याति
तद्वद्दत्तं विगततपसे केवलं ध्वंसमेति ॥ ४८७ ॥

शश्वच्छीलव्रतविरहिताः क्रोधलोभादिवन्तो
नानारम्भप्रहितमनसो ये मदग्रन्थशक्ताः।
ते दातारं कथमसुखतो रक्षितुं सन्ति शक्ता
नावा लोहं न हि जलनिधेस्तार्यते लोहमय्या ॥ ४८८ ॥

क्षेत्रद्रव्यप्रभृतिसमयान्वीक्ष्य बीजं यथोप्तं
दत्ते सस्यं विपुलममलं चारुसंस्कारयोगात्।
दत्तं पात्रे गुणवति तथा दानमुक्तं फलाय
सामग्रीतो भवति हि जने सर्वकार्यप्रसिद्धिः ॥ ४८९ ॥

नानादुःखव्यसननिपुणान्नाशिनोऽतृप्तिहेतू-
न्कर्मारातिप्रचयनपरांस्तत्त्वतो वेत्यभोगान्।
मुक्त्वाकाङ्क्षां विषयविषयां कर्मनिर्नाशनेच्छो
दद्याद्दानं प्रगुणमनसा संयतायापि विद्वान् ॥ ४९० ॥

यस्मै गत्वा विषयमपरं दीयते पुण्यवद्भिः
पात्रे तस्मिन्गृहमुपगते संयमाधारभूते।
नो यो मूढो वितरति धने विद्यमानेऽप्यनल्पे
तेनात्मात्र स्वयमपधिया वञ्चितो मानवेन ॥ ४९१ ॥

श्रुत्वा दानं कथितमपरैर्दीयमानं परेण
श्रद्धां धत्ते व्रजति च परां तुष्टिमुत्कृष्टबुद्धिः।
दृष्ट्वा दानं जनयति मुदं मध्यमो दीयमानं
दृष्ट्वा श्रुत्वा भजति मनुजो नानुरागं जघन्यः ॥ ४९२ ॥

दीर्घायुष्कः शशिसितयशो व्याप्तदिक्चक्रवालः
सद्विद्याश्रीकुलबलधनप्रीतिकीर्तिप्रतापः।
शूरो धीरः स्थिरतरमना निर्भयश्चारुरूप-
स्त्यागी भोगी भवति भविनां देहभीतिप्रदायी ॥ ४९३ ॥

कर्मारण्यं दहति शिखिवन्मातृवत्पाति दुःखा-
त्सम्यङ्नीतिं वदति गुरुवत्स्वामिवद्यद्बिभर्ति।

तत्त्वातत्त्वप्रकटनपटुस्पष्टमाप्नोति पूतं
तत्संज्ञानं विगलितमलं ज्ञानदानेन मर्त्यः ॥ ४९४ ॥
दाता भोक्ता बहुधनयुतः सर्वसत्त्वानुकम्पी
सत्सौभाग्यो मधुरवचनः कामरूपातिशायी ।
शश्वद्भक्त्या बुधजनशतैः सेवनीयाङ्घ्रियुग्मो
मर्त्यः प्राज्ञो व्यपगतमदो जायतेऽन्नस्य दानात् ॥ ४९५ ॥
रोगैर्वातप्रभृतिजनितैर्वह्निभिर्वाम्बुमग्नः
सर्वाङ्गीणव्यथनपटुभिर्बाधितुं नो स शक्यः ।
आजन्मान्तः परमसुखितां जायते चौषधानां
दाता यो निर्भरकुलवपुःस्थानकान्तिप्रतापः ॥ ४९६ ॥
दत्त्वा दानं जिनमतरुचिः कर्मनिर्नाशनाय
भुक्त्वा भोगांस्त्रिदशवसतौ दिव्यनारीसनाथः ।
मर्त्यावासे वरकुलवपुर्जैनधर्मं विधाय
हत्वा कर्म स्थिरतररिपुं मुक्तिसौख्यं प्रयाति ॥ ४९७ ॥

इति दाननिरूपणम् ॥ १९ ॥

भवति मद्यवशेन मनोभ्रमो भजति कर्म मनोभ्रमतो यतः ।
व्रजति कर्मवशेन च दुर्गतिं त्यजत मद्यमतस्त्रिविधेन भो ॥ ४९८ ॥
हसति नृत्यति गायति वल्गति भ्रमति धावति मूर्छति शोचते ।
पतति रोदिति जल्पति गद्गदं धमति धाम्यति मद्यमदातुरः ॥४९९॥
स्वसृसुताजननीरपि मानवो व्रजति सेवितुमस्तगतिर्यतः ।
सगुणलोकविनिन्दितमद्यतः किमपरं खलु कष्टतरं ततः ॥ ५०० ॥
गलति वस्त्रमधस्तनमीक्ष्यते सकलमन्यतया श्लथते तनुः ।
स्खलति पादयुगं पथि गच्छतः किमु न मद्यवशाच्छ्रयते जनः ॥५०१॥
असुभृतां वधमाचरति क्षणाद्वदति वाक्यमसह्यमसूनृतम् ।
परकलत्रधनान्यपि वाञ्छति न कुरुते किमु मद्यमदाकुलः ॥ ५०२ ॥
व्यसनमेति जनैः परिभूयते गदमुपैति न सत्कृतिमश्नुते ।
भजति नीचजनं व्रजति क्लमं किमिह कष्टमियर्ति न मद्यपः ॥५०३॥

प्रियतमामिव पश्यति मातरं प्रियतमां जननीमिव मन्यते ।
प्रचुरमद्यविमोहितमानसस्तदिह नास्ति न यत्कुरुते जनः ॥ ५०४ ॥
अहह कर्मकरीयति भूपतिं नरपतीयति कर्मकरं नरः ।
जलनिधीयति कूपमपांनिधिं गतजलीयति मद्यमदाकुलः ॥ ५०५ ॥
निपतितो वदते धरणीतलं वमति सर्वजनेन विनिन्द्यते ।
श्वशिशुभिर्वदने परिचुम्बिते बत सुरासुरतस्य च मूत्र्यते ॥ ५०६ ॥
भवति जन्तुगणो मदिरारसे तनु तनुर्विविधो रसकायिकः ।
पिबति····मदिरारसलालसः श्रयति दुःखममुत्र ततो जनः ॥ ५०७ ॥
व्यसनमेति करोति धनक्षयं मदमुपैति न वेत्ति हिताहितम् ।
क्रममतीत्य तनोति विचेष्टितं भजति मद्यवशेन न कां क्रियाम् ५०८
रटति रुष्यति तुष्यति वेपते पतति मुह्यति दीव्यति खिद्यते ।
नमति हन्ति जनं ग्रहिलो यथा यदपि किं च न जल्पति मद्यतः ५०९
व्रततपोयमसंयमनाशिनीं निखिलदोषकरीं मदिरां पिबन् ।
वदत धर्मवचो गतचेतनः किमु परं पुरुषस्य विडम्बनम् ॥ ५१० ॥
श्रयति पापमपाकुरुते वृषं त्यजति सद्गुणमन्यमुपार्जिते ।
व्रजति दुर्गतिमस्यति सद्गतिं किमथवा कुरुते न सुरारतः ॥ ५११ ॥
नरकसंगमनं सुखनाशनं व्रजति यः परिपीय सुधारसम् ।
बत विदार्य मुखं परिपायते प्रचुरदुःखमयो ध्रुवमत्र सः ॥ ५१२ ॥
पिबति यो मदिरामथ लोलुपः श्रयति दुर्गतिदुःखमसौ जनः ।
इति विचिन्त्य महामतयस्त्रिधा परिहरन्ति सदा मदिरारसम् ॥५१३॥
मननदृष्टिचरित्रतपोगुणं दहति वह्निरिवेन्धनमूर्जितम् ।
यदिह मद्यमपाकृतमुत्तमैर्न परमस्ति ततो दुरितं महत् ॥ ५१४ ॥
त्यजति शौचमियर्ति विनिन्द्यतां श्रयति दोषमपाकुरुते गुणम् ।
भजति गर्वमपास्यति सद्गुणं हृतमना मदिरारसलङ्घितः ॥ ५१५ ॥
प्रचुरदोषकरीमिह वारुणीं पिबति यः परिगृह्य धनेन ताम् ।
असुहरं विषमुग्रमसौ स्फुटं पिबति मूढमतिर्जननिन्दितम् ॥ ५१६ ॥

तदिय दूषणमङ्गिगणस्य नो विषमरिर्भुजगो धरणीपतिः ।
यदसुखं व्यसनभ्रमकारणं वितनुते मदिरा गुणिनिन्दिता ॥ ५१७ ॥
मतिधृतिद्युतिकीर्तिकृपाङ्गना परिहरन्ति रुषेव जनार्चितम् ।
नरमवेक्ष्य सुराङ्गनयाश्रितं न हि परां सहते वनिताङ्गनाम् ॥ ५१८ ॥
कलहमातनुते मदिरावशस्तमिह येन निरस्यति जीवितम् ।
वृषमपास्यति संचिनुते मलं धनमपैति जनैः परिभूयते ॥ ५१९ ॥
स्वजनमन्यजनीयति मूढधीः परजनं स्वजनीयति मद्यपः ।
किमथवा बहुना कथितेन भो द्वितयलोकविनाशकरी सुधा ॥ ५२० ॥
भवति मद्यवशेन मनोभवः सफलदोषकरोऽत्र शरीरिणः ।
भजति तेन विकारमनेकधा गुणयुतेन सुरा परिवर्ज्यते ॥ ५२१ ॥
प्रचुरदोषकरी मदिरामिति द्वितयजन्मविबाधविचक्षणम् ।
निखिलतत्त्वविवेचकमानसा परिहरन्ति सदा गुणिनो जनाः ॥ ५२२ ॥

इति मद्यनिषेधनिरूपणम् ॥ २० ॥

मांसाशनाज्जीववधानुमोदस्ततो भवेत्पापमनन्तमुग्रम् ।
ततो व्रजेद्दुर्गतिमुग्रदोषां मत्वेति मांसं परिवर्जनीयम् ॥ ५२३ ॥
तनूद्भवं मांसमदन्नमेध्यं कृम्यालयं साधुजनप्रनिन्द्यम् ।
निस्त्रिंशचित्तो विनिकृष्टगन्धं शुनीविशेषं लभते कथं न ॥ ५२४ ॥
मांसाशिनो नास्ति दयासुभाजां दयां विना नास्ति जनस्य पुण्यम् ।
पुण्यं विना याति दुरन्तदुःखं संसारकान्तारमलभ्यपारम् ॥ ५२५ ॥
पलादिनो नास्ति जनस्य पापं वाचेति मांसाशिजनप्रभुत्वम् ।
ततो वधास्तित्वमतोधमसान्निष्पापवादी नरकं प्रयाति ॥ ५२६ ॥
षट्कोटिशुद्धं पलमश्नतो नो दोषोऽस्ति ये नष्टधियो वदन्ति ।
नरादिमांसं प्रतिषिद्धमेतैः किं किं न षोढास्ति विशुद्धिरत्र ॥ ५२७ ॥
अश्नाति यो मांसमसौ विधत्ते वधानुमोदं त्रसदेहभाजाम् ।
गृह्णाति रेफांसि ततस्तपस्वी तेभ्यो दुरन्तं भवमेति जन्तुः ॥ ५२८ ॥

---

१. खादन्.

आहारभोजी कुरुते न मोदं नरो वधे स्थावरजङ्गमानाम् ।
तस्यापि तस्माद्दुरितानुषङ्गमित्याह यस्तं प्रतिवच्मि किंचित् ॥५२९॥
येऽन्नाशिनः स्थावरजन्तुघातान्मांसाशिनो येऽत्र सजीवघातान् ।
दोषस्तयोः स्यात्परमाणुमेर्वोर्यथान्तरं बुद्धिमतेति वेद्यम् ॥ ५३० ॥
अन्नाशने स्यात्परमाणुमात्रः प्रशक्यते शोधयितुं तपोभिः ।
मांसाशने पर्वतराजमात्रो नो शक्यते शोधयितुं महत्वात् ॥ ५३१ ॥
मांसं यथा देहभृतः शरीरं तथान्नमप्यङ्गि शरीरतातः ।
ततस्तयोर्दोषगुणौ समानावेतद्वचो युक्तिविमुक्तमत्र ॥ ५३२ ॥
मांसं शरीरं भवतीह जन्तोर्जन्तोः शरीरं न तु मांसमेव ।
यथा तमालो नियमेन वृक्षो वृक्षस्तमालो न तु सर्वथापि ॥ ५३३ ॥
रसोत्कटत्वेन करोति गृद्धिं मांसं यथान्नं न तथात्र जातु ।
ज्ञात्वेति मांसं परिवर्ज्य साधुराहारमश्नातु विशोध्य पूतम् ॥ ५३४ ॥
करोति मांसं बलमिन्द्रियाणां ततोऽभिवृद्धिं मदनस्य तस्मात् ।
करोत्ययुक्तिं प्रविचिन्त्य बुद्ध्या त्यजन्ति मांसं त्रिविधेन सन्तः॥५३५॥
गृद्धिं विना भक्षयतो न दोषो मांसं नरस्यान्नवदस्तदोषम् ।
एवं वचः केचिदुदाहरन्ति युक्त्या विरुद्धं तदपीह लोके ॥ ५३६ ॥
आहारवर्गे सुलभे विचित्रे विमुक्तपापे भुवि विद्यमाने ।
प्रारम्भदुःखं विविधं प्रपोष्य चेदस्ति गृद्धिर्न किमस्ति मांसम्॥५३७॥
वरं विषं भक्षितमुग्रदोषं यदेकवारं कुरुतेऽसुनाशम् ।
मांसं महादुःखमनेकवारं ददाति जग्धं मनसापि पुंसाम् ॥ ५३८ ॥
अश्नाति यः संस्कुरुते निहन्ति ददाति गृह्णात्यनुमन्यते च ।
एते षडप्यत्र विनिन्दनीया भ्रमन्ति संसारवने निरन्तरम् ॥ ५३९ ॥
चिरायुरारोग्यसरूपकान्तिप्रीतिप्रतापप्रियवादिताद्याः ।
गुणा विनिन्द्यस्य सता नरस्य मांसाशिनः सन्ति परत्र नेमे ॥५४०॥
विद्यादयासंयमसत्यशौचध्यानव्रतज्ञानदमक्षमाद्याः ।
संसारनिस्तारनिमित्तभूताः पलाशिनः सन्ति गुणा न सर्वे ॥ ५४१ ॥

मृगान्वराकांश्चलतोऽपि तूर्णान्निरागसोऽत्यन्तविभीतचित्ताः ।
येऽश्नन्ति मांसानि निहत्य पापास्तेभ्यो निकृष्टा अपरे न सन्ति ५४२
मांसान्यशित्वा विविधानि मर्त्यो यो निर्दयात्मा नरकं प्रयाति ।
निकृत्य शस्त्रेण परैर्निकृष्टैः प्रखाद्यते मांसमसौ स्वकीयम् ॥ ५४३ ॥
निवेद्य सत्त्वेष्वपदोषभावं येऽश्नन्ति पापाः पिशितानि गृध्राः ।
तैः कारितोऽतीव वधः समस्तस्तेभ्यो वको नास्ति व हिंसको हि ॥५४४॥
शास्त्रेषु येष्वङ्गिवधः प्रवृत्तो वकोक्तशास्त्राणि यथा न तानि ।
प्रमाणमिच्छन्ति विबुद्धतत्त्वाः संसारकान्तारविनिन्दनीयः ॥ ५४५ ॥
यद्रक्तरेतो मलवार्यमङ्गं मांसं तदुद्भूतमनिष्टगन्धम् ।
यद्यश्नुते मेध्यसमं न दोषं तर्हि श्वचण्डालवृका न दुष्टाः ॥ ५४६ ॥
धर्मद्रुमस्यास्तमलस्य मूलं निर्मूलमुन्मूलितमङ्गभाजाम् ।
शिवादिकल्याणफलप्रदस्य मांसाशिना स्यान्न कथं नरेण ॥ ५४७ ॥
दुःखानि यान्यत्र कुयोनिया(जा)नि भवन्ति सर्वाणि नरस्य तानि ।
पलाशनेनेति विचिन्त्य सन्तस्त्यजन्ति मांसं त्रिविधेन नित्यम्॥५४८॥

इति मांसनिषेधनिरूपणम् ॥ २१ ॥

मध्वस्यतः कृपा नास्ति पुण्यं नास्ति कृपां विना ।
विना पुण्यं नरो दुःखी पर्यटेद्भवसागरे ॥ ५४९ ॥
एकैकोऽसंख्यजीवानां घाततो मधुनः कणः ।
निष्पद्यते यतस्तेन मध्वस्यति कथं बुधः ॥ ५५० ॥
ग्रामाणां सप्तको दग्धे यद्भवेत्सर्वथा नृणाम् ।
पापं तदेव निर्दिष्टं भक्षिते मधुनः कणे ॥ ५५१ ॥
एकैकस्य यदादाय पुष्पस्य मधु संचितम् ।
किंचिन्मधुकरीवर्गैस्तदप्यश्नन्ति निर्घृणाः ॥ ५५२ ॥
अनेकजीवघातोत्थं म्लेच्छोच्छिष्टं मलाविलम् ।
मलाक्तपात्रं निक्षिप्तं किं शौचं लिहतो मधु ॥ ५५३ ॥

---

१. सिंहादयः.

वरं हालाहलं पीतं सद्यः प्राणहरं विषम् ।
ना पुनर्भक्षितं शश्वद्दुःखदं मधु देहिनाम् ॥ ५५४ ॥
दुःखानि यानि संसारे विद्यन्तेऽनेकभेदतः ।
सर्वाणि तानि लभ्यन्ते जीवेन मधुभक्षणात् ॥ ५५५ ॥
शमो दमो दया धर्मः संयमः शौचमार्जवम् ।
पुंसस्तस्य न विद्यन्ते यो लेढि मधुलालसः ॥ ५५६ ॥
औषधायापि यो मर्त्यो मध्वस्यति विचेतनः ।
कुयोनौ जायते सोऽपि किं पुनस्तत्र लोलुपः ॥ ५५७ ॥
प्रमादेनापि यत्पीतं भवभ्रमणकारणम् ।
तदश्नाति कथं विद्वान्भीतचित्तो भवान्मधु ॥ ५५८ ॥
एकमप्यत्र यो बिन्दुं भक्षयेन्मधुनो नरः ।
सोऽपि दुःखझषाकीर्णे पतते भवसागरे ॥ ५५९ ॥
ददाति लाति यो भुङ्क्ते निर्दिशत्यनुमन्यते ।
गृह्णाति माक्षिकं पापः षडेते समभागिनः ॥ ५६० ॥
एकत्रापि हते जन्तौ पापं भवति दारुणम् ।
न सूक्ष्मानेकजन्तूनां घातिनो मधुपस्य किम् ॥ ५६१ ॥
योऽश्नाति मधु निस्त्रिंशस्तज्जीवास्तेन मारिताः ।
चेन्नास्ति खादकः कश्चिद्वधकः स्यात्तदा कथम् ॥ ५६२ ॥
एकत्र मधुनो बिन्दौ भक्षितेऽसंख्यदेहिनः ।
यो हि न स्यात्कृपा तस्य तस्मान्मधु न भक्षयेत् ॥ ५६३ ॥
अनेकदोषदुष्टस्य मधुनोपास्तदोषताम् ।
यो ब्रूते तद्रसाशक्तः सोऽसत्यां बुद्धिरस्तधीः ॥ ५६४ ॥
यद्यल्पेऽपि हृते द्रव्ये लभन्ते व्यसनं जनाः ।
निःशेषं मधुकर्यर्थं मुष्णन्तो न कथं व्यधुः ॥ ५६५ ॥
मधुप्रयोगतो वृद्धिर्मदनस्य ततो जनः ।
संचिनोति महत्पापं यात्यतो नरकावनिम् ॥ ५६६ ॥

दीनैर्मधुकरैर्वर्गैः संचितं मधु कृच्छ्रतः ।
यः स्वीकरोति निस्त्रिंशः सोऽन्यत्त्यजति किं नरः ॥ ५६७ ॥
पञ्चाप्येवं महादोषान्यो धत्ते मधुलम्पटः ।
संसारकूपतस्तस्य नोत्तारो जातु जायते ॥ ५६८ ॥
संसारभीरुभिः सद्भिर्जिनाज्ञां परिपालितुम् ।
यावज्जीवं परित्याज्यं सर्वथा मधु मानवैः ॥ ५६९ ॥
विज्ञायेति महादोषं मधुनो बुधसत्तमाः ।
संसारासारतस्त्रस्ता विमुञ्चन्ति मधु त्रिधा ॥ ५७० ॥

इति मधुनिषेधनिरूपणम् ॥ २२ ॥

याति मनस्तनुजातिजनानां सन्ति जगत्त्रितयेऽप्यसुखानि ।
कामपिशाचवशीकृतचेतास्तानि नरो लभते सकलानि ॥ ५७१ ॥
ध्यायति धावति कम्पमियर्ति श्राम्यति ताम्यति नश्यति नित्यम् ।
रोदिति सीदति जल्पति दीनं गायति नृत्यति मूर्छति कामी ॥५७२॥
रुष्यति तुष्यति दास्यमुपैति कर्षति दीव्यति सीव्यति वस्त्रम् ।
किं न करोत्यथवा हतबुद्धिः कामवशो पुरुषो जननिन्द्यम् ॥ ५७३ ॥
वेत्ति न धर्ममधर्ममियर्ति म्लायति शोचति याति कृशत्वम् ।
नीचजनं भजते व्रजतीर्ष्यां मन्मथराजविमर्दितचित्तः ॥ ५७४ ॥
नैति रतिं गृहपत्तनमध्ये ग्रामधनस्वजनान्यजनेषु ।
वर्षसमं क्षणमेकमवैति पुष्पधनुर्वशतामुपयातः ॥ ५७५ ॥
सर्वजनेन विनिन्दितमूर्तिः सर्वविचारबहिर्भवबुद्धिः ।
सर्वजनप्रथितां निजकीर्तिं मुञ्चति कन्तुवशो गतकान्तिः ॥ ५७६ ॥
भोजनशीतिविहाररतानां सज्जन साधुवतां श्रमणानाम् ।
आममयामिव पात्रमपात्रं ध्वस्तसमस्तसुखो मदनार्तः ॥ ५७७ ॥
चारुगुणो विदिताखिलशास्त्रः कर्म करोति कुलीनविनिन्द्यम् ।
मातृपितृस्वजनान्यजनानां नैति वशं मदनस्य वशो ना ॥ ५७८ ॥
तावदशेषविचारसमर्थस्तावदखण्डित मूर्छति मानम् ।
तावदपास्तमलो मननीयो यावदनङ्गवशी न मनुष्यः ॥ ५७९ ॥

शोचति विश्वमभीप्सति द्रष्टुमाश्रयति ज्वरमृच्छति दाहम् ।
मुञ्चति भक्तिमुपैति विमोहं माद्यति वेपति याति मृतिं च ॥ ५८० ॥
एवमपास्तमतिः क्रमतोऽत्र पुष्पधनुर्दशवेगविधूतः ।
किं न जनो लभते जननिन्द्यो दुःखमसह्यमनन्तमवाच्यम् ॥ ५८१ ॥
चिन्तनकीर्तनभाषणकेलिस्पर्शनदर्शनविभ्रमहास्यैः ।
अष्टविधं निगदन्ति मुनीन्द्राः काममपाकृतकामविबाधाः ॥ ५८२ ॥
सर्वजनैः कुलजो जनमान्यः सर्वपदार्थविचारणदक्षः ।
मन्मथबाणविभिन्नशरीरः किं न नरः कुरुते जननिन्द्यम् ॥ ५८३ ॥
अह्नि रविर्दहति शुचि वृद्धः पुष्पधनुर्दहति प्रबलोढम् ।
रात्रिदिनं पुनरन्तरमन्तः संवृतिरस्ति रवेर्न तु कन्तोः ॥ ५८४ ॥
स्थावरजङ्गमभेदविभिन्नं जीवगणं विनिहन्ति समस्तम् ।
निष्करुणं कृतपापकचेष्टः कामवशः पुरुषोऽतिनिकृष्टः ॥ ५८५ ॥
निष्ठुरमश्रवणीयमनिष्टं वाक्यमसह्यमवद्यमहृद्यम् ।
जल्पति वक्रमवाच्यमपूज्यं मद्यमदाकुलवन्मदनार्तः ॥ ५८६ ॥
स्वार्थपरः परदुःखमविद्यन्प्राणसमानपरस्य धनानि ।
संसृतिदुःखविधावविदित्वा पापमनङ्गवशो हरतेऽङ्गी ॥ ५८७ ॥
यो परिचिन्त्य भवार्णवदुःखमन्यकलत्रमभीप्सति कामी ।
साधुजनेन विनिन्द्यमगम्यं तस्य किमत्र परं परिहार्यम् ॥ ५८८ ॥
तापकरं पुरुपातकमूलं दुःखशतार्थमनर्थनिमित्तम् ।
लाति वशः पुरुषः कुसुमेषोर्ग्रन्थमनेकविधं बुधनिन्द्यम् ॥ ५८९ ॥
एवमनेकविधं विदधाति यो जननार्णवपातनिमित्तम् ।
चेष्टितमङ्गजबाणविभिन्नो नेह सुखी न परत्र सुखी सः ॥ ५९० ॥
दृष्टिचरित्रतपोगुणविद्याशीलदयादमशौचशमाद्यान् ।
कामशिखी दहति क्षणतो नुर्वह्निरिवेन्धनमूर्जितमत्र ॥ ५९१ ॥
किं बहुना कथितेन नरस्य कामवशस्य न किंचिदकृत्यम् ।
एवमवेत्य सदा मतिमन्तः कामरिपुं क्षयमत्र नयन्ति ॥ ५९२ ॥

नारिरिमं विदधाति नराणां रौद्रमना नृपतिर्न करीन्द्रः ।
दोषमहिर्न न तीव्रविषं वा यं वितनोति मनोभववैरी ॥ ५९३ ॥
एकभवे रिपुपन्नगदुःखं जन्मशतेषु मनोभवदुःखम् ।
चारुधियेति विचिन्त्य महान्तः कामरिपुं क्षणतः क्षपयन्ति ॥ ५९४ ॥
संयमधर्मविबद्धशरीराः साधुभटाः शरवैरिणमुग्रम् ।
शीलतपःशितशस्त्रनिपातैर्दर्शनबोधबलाद्विधुनन्ति ॥ ५९५ ॥

इति कामनिषेधनिरूपणम् ॥ २३ ॥

सत्यशौचशमसंयमविद्याशीलवृत्तगुणसत्कृतिलज्जाः ।
याः क्षिपन्ति पुरुषस्य समस्तास्ता बुधः कथमिहेच्छति वेश्याः ॥ ५९६ ॥
यासु शक्तमनसः क्षयमेति द्रव्यमापदुपयाति समृद्धिम् ।
निन्द्यता भवति नश्यति कीर्तिस्ता भजन्ति गणिकाः किमु मान्याः ॥ ५९७ ॥
धर्ममत्ति तनुते पुरु पापं या निरस्यति गुणं कुरुतेऽन्यम् ।
सौख्यमस्यति ददाति च दुःखं तां धिगस्तु गणिकां बहुदोषाम् ॥ ५९८ ॥
जल्पनं च जघनं च यदीयं निन्द्यलोकमलदिग्धमवाच्यम् ।
पण्ययोषितमनर्थनिमित्तां तां नरस्य भजतः किमु शौचम् ॥ ५९९ ॥
संदधाति हृदयेऽन्यमनुष्यं यान्यमाह्वयति दृष्टिविशेषैः ।
अन्यमर्थिनमतो भजते तां को बुधः श्रयति पण्यपुरंध्रीम् ॥ ६०० ॥
श्रीकृपामतिधृतिद्युतिकीर्तिप्रीतिकान्तिशमतापटुताद्याः ।
योषितः परिहरन्ति रुषेव पण्ययोषिति विषक्तमनस्कान् ॥ ६०१ ॥
या करोति बहुचाटुशतानि द्रव्यदातरि जनेऽप्यकुलेने ।
निर्धनं त्यजति काममपि स्त्रीं तां विशुद्धधिषणा न भजन्ति ॥ ६०२ ॥
उत्तमोऽपि कुलजोऽपि मनुष्यः सर्वलोकमहितोऽपि बुधोऽपि ।
दासतां भजति यां भजमानस्तां भजन्ति गणिकां किमु सन्तः ॥ ६०३ ॥
या विचित्रविटकोटिनिघृष्टा मद्यमांसनिरतातिनिकृष्टा ।
कोमलां वचसि चेतसि दुष्टां तां भजन्ति गणिकां न विशिष्टाः ॥ ६०४ ॥
यार्थसंग्रहपरातिनिघृष्टा सत्यशौचशमधर्मबहिष्टा ।
सर्वदोषनिलयातिनिकृष्टा तां श्रयन्ति गणिकां किमु शिष्टाः ॥ ६०५ ॥

या कुलीनमकुलीनममान्यमन्यमाश्रितगुणं गुणहीनम् ।
वेत्ति नो कपटसंकटचेष्टां तां व्रजन्ति गणिकां किमु शिष्टाः ॥ ६०६ ॥
तावदेव दयितः कुलजोऽपि यावदर्पयति भूरिधनानि ।
येक्षुवत्त्यजति निर्गतसारं तत्र हो किमु सुखं गणिकायाम् ॥ ६०७ ॥
तावदेव पुरुषो जनमान्यस्तावदाश्रयति चारुगुणश्रीः ।
तावदामनति धर्मवचांसि यावदेति न वशं गणिकायाः ॥ ६०८ ॥
मन्यते न धनसौख्यविनाशं नाभ्युपैति गुरुसज्जनवाक्यम् ।
नेक्षते भवसमुद्रमपारं दारिकार्पितमना गतबुद्धिः ॥ ६०९ ॥
वारिराशिसिकतापरिमाणं सर्परात्रिजलमध्यगमार्गः ।
ज्ञायते च निखिलं ग्रहचक्रं नो मनस्तु चपलं गणिकायाः ॥ ६१० ॥
या शुनीव बहुचाटुशतानि दानतो वितनुते मलभक्षा ।
पापकर्मजनिता कपटेष्टा यान्ति पण्यवनितां न बुधास्ताम् ॥ ६११ ॥
मद्यमांसमलदिग्धमशौचं नीचलोकमुखचुम्बनदक्षम् ।
यो हि चुम्बति मुखं गणिकाया नास्ति तस्य सदृशोऽतिनिकृष्टः ॥ ६१२ ॥
या न विश्वसिति जातु नरस्य प्रत्ययं तु कुरुते निकृतज्ञा ।
नोपकारमपि वेत्ति कृतघ्नी दूरतस्त्यजत तां खलु वेश्याम् ॥ ६१३ ॥
रागमीक्षणयुते तनुकम्पं बुद्धिसत्त्वजनवीर्यविनाशम् ।
या करोति कुशला त्रिविधेन तां त्यजन्ति गणिकां मदिरेव ॥ ६१४ ॥
योपतापनपराग्निशिखेव चित्तमोहनकरी मदिरेव ।
देहदारणपटुश्छुरिकेव तां भजन्ति कथमापणयोषाम् ॥ ६१५ ॥
सर्वसौख्यदतपोधनचौरी सर्वदुःखनिपुणा जनमारी ।
मर्त्यमत्तकरिबन्धनवारी निर्मितात्र विधिना परनारी ॥ ६१६ ॥
शुभ्रवर्त्म सुरसद्मकपाटं यात्र मुक्तिसुखकाननवह्निः ।
तत्र दोषवसतौ गुणशत्रौ किं श्रयन्ति सुखमापणनार्याम् ॥ ६१७ ॥
यन्निमित्तमुपयाति मनुष्यो दास्यमस्यति कुलं विदधाति ।
धर्मनिन्दितमनेकमलज्जः सा न पण्यवनिता श्रयणीया ॥ ६१८ ॥

चेन्न पण्यवनिता जगति स्याद्दुःखदाननिपुणाः कथमेते ।
प्राणिनो जननदुःखमपारं प्राप्नुवन्ति गुरु सोढुमशक्यम् ॥ ६१९ ॥
दोषमेवमवगम्य मनुष्यः शुद्धबोधजलधौतमनस्कः ।
तत्त्वतस्त्यजति पण्यपुरंध्रीजन्मसागरनिपातनदक्षम् ॥ ६२० ॥

इति वेश्यासङ्गनिषेधनिरूपणम् ॥ २४ ॥

यानि कानिचिदनर्थवीचिके जन्मसागरजले निमज्जताम् ।
सन्ति दुःखनिलयानि देहिनां तानि चाक्षरमणेन निश्चितम् ॥ ६२१ ॥
तावदत्र पुरुषा विवेकिनस्तावति प्रतिजनेषु पूज्यताम् ।
तावदुत्तमगुणा भवन्ति च यावदक्षरमणं न कुर्वते ॥ ६२२ ॥
सत्यशौचशमशर्मवर्जिता धर्मकामधनतो वहिष्कृताः ।
द्यूतदोषमतिना विचेतनाः कं न दोषमुपचिन्वते जनाः ॥ ६२३ ॥
सत्यमस्यति करोत्यसत्यतां दुर्गतिं नयति हन्ति सद्गतिम् ।
धर्ममत्ति वितनोति पातकं द्यूतमत्र कुरुतेऽथवा न किम् ॥ ६२४ ॥
द्यूततोऽपि कुपितो विकम्पते विग्रहं भजति तन्नरो यतः ।
जायते मरणमारणक्रिया तेन तच्छुभमतिर्न दीव्यति ॥ ६२५ ॥
द्यूतदेवनर तस्य विद्यते देहिनां न करुणा विना तया ।
पापमेति परदुःखकारणं श्वभ्रवासमुपयाति तेन सः ॥ ६२६ ॥
पैशुनं कटुकमश्रवासुखं वक्ति वाक्यमनृतं विनिन्दितम् ।
वञ्चनाय कितवो विचेतनस्तेन तिर्यग्गतिमेति तेन सः ॥ ६२७ ॥
अन्यदीयमविचिन्त्य पातकं निर्घृणो हरति जीवितोपमम् ।
द्रव्यमत्र कितवो विचेतनस्तेन गच्छति कदर्थतां चिरम् ॥ ६२८ ॥
श्वभ्रदुःखपटुकर्मकारिणीं कामिनीमपि परस्य दुःखदाम् ।
द्यूतदोषमलिनोऽभिलष्यति संसृतावटति तेन दुःखितः ॥ ६२९ ॥
जीवनाशनमनेकधादधद्ग्रन्थमक्षरमणोद्यतो नरः ।
स्वीकरोति बहुदुःखमस्तधीस्तत्प्रयाति भवकाननं यतः ॥ ६३० ॥
साधुबन्धुपितृमातृसज्जनान्मन्यते न तनुते मलं कुले ।
द्यूतरोपितमना निरस्तधीः श्वभ्रवासमुपयात्यसौ यतः ॥ ६३१ ॥

द्यूतनाशितधनो गताशयो मातृवस्त्रमपि योऽपकर्षति।
शीलवृत्तिकुलनीतिदूषणः किं न कर्म कुरुते स मानवः॥ ६३२॥
घ्राणकर्णकरपादकर्तनं यद्वशे न लभते शरीरवान्।
तत्समस्तसुखधर्मनाशनं द्यूतमाश्रयति कः सचेतनः॥ ६३३॥
धर्मकामधनसौख्यनाशिना वैरिणाक्षरमणेन देहिनाम्।
सर्वदोषनिलयेन सर्वदा संपदा खलु सहाश्वमाहिषम्॥ ६३४॥
यद्वशाद्वितयजन्मनाशनं युद्धराटि कलहादि कुर्वते।
तेन शुद्धधिषणा न तन्यते द्यूतमत्र मनसापि मानवाः॥ ६३५॥
द्यूतनाशितसमस्तभूतिको बम्भ्रमीति सकलां भुवं नरः।
जीर्णवस्त्रकृतदेहसंहतिर्मस्तकाहितभरः क्षुधातुरः॥ ६३६॥
याचते नटति याति दीनतां लज्जते न कुरुते विडम्बनाम्।
सेवते नमति याति दासतां द्यूतसेवनपरो नरोऽधमः॥ ६३७॥
रुध्यतेऽन्यकितवैर्निषेध्यते वध्यते वचनमुच्यते कटु।
नोद्यतेऽत्र परिभूयते नरो हन्यते च कितवो विनिन्द्यते॥ ६३८॥
हन्ति ताडयति भाषते वचः कर्कशं रटति विद्यते व्यथाम्।
संतनोति विदधाति रोधनं द्यूततोऽथ कुरुते न किं नरः॥ ६३९॥
जल्पितेन बहुधा किमत्र भो द्यूततो न परमस्ति दुःखदम्।
चेतसेति परिचिन्त्य सज्जनाः कुर्वते न रतिमत्र सर्वथा॥ ६४०॥
शीलवृत्तगुणधर्मरक्षणं स्वर्गमोक्षसुखदानपेशलम्।
कुर्वताक्षरमणं न तत्त्वतः सेव्यते सकलदोषकारणम्॥ ६४१॥

इति द्यूतनिषेधनिरूपणम्॥ २५॥

वाञ्छत्यङ्गी समस्तं सुखमनवरतं कर्मविध्वंसतस्त-
च्चारित्रात्स्यात्प्रबोधाद्भवति तदमलं सश्रुतादाप्ततस्तत्।
निर्दोषात्मा सदोषा जगति निगदिता द्वेषरागादयोऽत्र
ज्ञात्वा मुक्त्यै सदोषान्विकलितविपदे नाश्रयन्त्वस्ततन्द्राः॥६४२॥
जन्माकूपारमध्यं मृतिजननजरावर्तमत्यन्तभीमं
नानादुःखोग्रनक्रभ्रमणकलुषितं व्याधिसिन्धुप्रवाहम्।

नीयन्ते प्राणिवर्गाः पुरुदुरितभरं यैर्निरूप्यारसन्त-
स्ते रागद्वेषमोहा रिपुवदसुखदा येन धूताः स आप्तः ॥ ६४३ ॥
देहार्धं येन शंभुर्गिरिपतितनयां नीतवान्ध्वस्तधैर्यो
वक्षोलक्ष्मीं मुरुद्विट् पंयसिजनिलयोऽष्टार्धवक्त्रो बभूव ।
गीर्वाणानामधीशो दशशतभगतामस्तबुद्धिः प्रयातः
प्रध्वस्तो येन सोऽपि कुसुमशररिपुर्देवमाप्तं तमाहुः ॥ ६४४ ॥
पृथ्वीमुद्धर्तुमीशाः सलिलधिसलिलं पातुमद्रिं प्रवेष्टुं
ज्योतिश्चक्रं निरोद्धुं प्रचलितमनिलं येऽशितुं सत्त्ववन्तः ।
निर्जेतुं तेऽपि यानि प्रथितपृथुगुणाः शक्नुवन्ति स्म नेन्द्रा
योऽत्रामूनीन्द्रियाणि त्रिजगति जितवानासमाहुस्तमीशम् ॥६४५॥
वर्णोष्टस्यन्दमुक्ता सकृदखिलजनान्बोधयन्ती विबाधा
निर्वाञ्छोच्छ्वासदोषा मनसि विदधती साम्यमानन्दधात्री ।
ध्रौव्योत्पादव्ययात्म्यं त्रिभुवनमखिलं भाष्यते यस्य वाणी
तं मोक्षाय श्रयन्तु स्थिरतरधिषणा देवमाप्तं मुनीन्द्राः ॥ ६४६ ॥
भावाभावस्वरूपं सकलमसकलं द्रव्यपर्यायतत्त्वं
भेदाभेदावलीढं त्रिभुवनभुवनाभ्यन्तरे वर्तमानम् ।
लोकालोकावलोकी गतनिखिलमलं लोकने यस्य बोध-
स्तं देवं मुक्तिकामा भवभवनभिदे भावयन्त्वाप्तमत्र ॥ ६४७ ॥
स्याच्चेन्नित्यं समस्तं परिणतिरहितं कर्तृकर्मव्युदासा-
त्संबन्धस्तत्र दृश्येन्न····फलवतोर्नाप्यनित्ये समस्ते ।
पर्यालोच्येति येन प्रकटितमुभयं ध्वस्तदोषप्रपञ्चं
तत्सेवध्वं विमुक्त्यै जननिगलिता भक्तितो देवमाप्तम् ॥ ६४८ ॥
नो चेत्कर्ता न भोक्ता यदि भवति विभुर्नो वियोगेन दुःखी
स्याच्चेदेकः शरीरी प्रतितनु स तदान्यस्य दुःखेन दुःखी ।
स्याद्विज्ञायेति जन्तुर्गतिनिखिलमलं योऽभ्यधत्तेऽद्धबोधं
तं पूज्याः पूजयन्तु प्रशसितविपदं देवमाप्तं विमुक्त्यै ॥ ६४९ ॥

---

१. ब्रह्मा.

या रागद्वेषमोहाञ्जनयति हरते चारुचारित्ररत्नं
भित्ते मानोच्चशैलं मलिनयति कुलं कीर्तिवल्लीं लुनीते ।
तस्यां ये यान्ति नार्यामुपहतमनसा शक्तिमत्यन्तमूढा
देवाः कन्दर्पतप्ता ददति तनुमतां ते कथं मोक्षलक्ष्मीम् ॥ ६५० ॥

पीनश्रोणीनितम्बस्तनजघनभराक्रान्तमन्दप्रयाणा-
स्तारुण्योद्रेकरम्या मदनशरहताः कामिनीर्ये भजन्ते ।
स्थूलोपस्थस्थलीनां कुशलकरतलास्फाललीलाकुलास्ते
देवाः स्युश्चेज्जगत्यामिह विदत विदः कीदृशाः सन्त्यसन्तः ॥६५१॥

ये संगृह्यायुधानि क्षतरिपुरुधिरैः पिञ्जराण्यास्तरेखा
वज्रेष्वासासिचक्रक्रकचहलगदाशूलपाशादिकानि ।
रौद्रभ्रूभङ्गवक्राः सकलभवभृतां भीतिमुत्पादयन्ते
ते चेद्देवा भवन्ति प्रणिगदत बुधा लुब्धकाः के भवेयुः ॥ ६५२ ॥

व्याध्याधिव्याधकीर्णे विषयमृगगणे कामकोपादिसर्पे
दुःखक्षोणीरुहाढ्ये भवगहनवने भ्राम्यते येन जीवः ।
ये तत्स्त्रीमद्यमांसत्रयमिदमधिपा निन्दनीयं भजन्ते
देवाश्चेत्तेऽपि पूज्या निगदत सुधियो निन्दिताः के भवेयुः॥६५३॥

निद्राचिन्ताविषादश्रममदनमदस्वेदखेदप्रमाद-
क्षुद्रागद्वेषतृष्णामृतिजननजराव्याधिशोकस्वरूपाः ।
यस्यैतेऽष्टादशापि त्रिभुवनभवभृद्व्यापिनः सन्ति दोषा-
स्ते देवं नाप्तमाहुर्नयनिपुणधियो मुक्तिमार्गाभिधाने ॥ ६५४ ॥

रक्ताद्रेभेन्द्रकृत्तिं नटति गणवृतो यः श्मशाने गृहीत्वा
निस्त्रिंशो मांसमत्ति त्रिभुवनभविनां दक्षिणो नाननेन ।
गौरीगङ्गाङ्गसङ्गी त्रिपुरदहनकृद्दैत्यविध्वंसदक्ष-
स्तं रुद्रं रौद्ररूपं कथममलधियो निन्द्यमाप्तं वदन्ति ॥ ६५५ ॥

त्यक्त्वा पद्मामनिन्द्यां मदनशरहतो गोपनारीं सिषेवे
निद्राविद्राणचित्तः कपटशतमयो दानवारातिघाती ।

रागद्वेषावधूतो द्युपतिसुतरथे सारथिर्योऽभवत्तं
कुर्वाणं प्रेम नार्या विटवदतिशयं नाप्तमाहुर्मुरारिम् ॥ ६५६ ॥
यः कन्तूत्तप्तचित्तो विकलितचरणोऽष्टार्धवक्त्रत्वमाप-
न्नानानाट्यप्रयोगत्रिदशपतिवधूदत्तवीक्ष्याकुलाक्षः ।
क्रुद्धश्चिच्छेद शंभुर्वितथवचनतः पञ्चमं यस्य वक्त्रं
स ब्रह्माप्नोति वीनः प्रणिगदत कथं कथ्यते तत्त्वबोधैः ॥ ६५७ ॥
यो भ्रान्त्वोदेति कृत्वा प्रतिदिनमसुरैर्विग्रहं व्याधिविद्धो
यो दुर्वारेण दीनो भयचकितमना ग्रस्यते राहुणा च ।
मूढो विध्वस्तबोधः कुसुमशरहतः सेवते कामिनीं यः
सन्तस्तं भानुमाप्तं भवगहनवनच्छित्तये नाश्रयन्ति ॥ ६५८ ॥
मूढः कन्दर्पतप्तो वनचरयुवतौ भग्नवृत्तः षडास्य-
स्तद्भार्याशक्तचित्तस्त्रिदशपतिरभूद्गौतमेनाभिशप्तः ।
वह्निर्निःशेषभक्षी विगतकृपमना लाङ्गली मद्यलोलो
नैकोऽप्येतेषु देवो विगलितकलिलो दृश्यते तत्र रूपम् ॥ ६५९ ॥
रागान्धाः पीनयोनिस्तनजघनभराक्रान्तनारीप्रसङ्गा-
त्कोपादारातिघाताः प्रहरणधरणाद्द्वेषिणो भीतिमन्तः ।
आत्मीयानेकदोषाध्यवसितविरहात्स्नेहतो दुःखिनश्च
ये देवास्ते कथं वः शमयमनियमान्दातुमीशा विमुक्त्यै ॥ ६६० ॥
पर्यालोच्यैवमत्र स्थिरपरमधियस्तत्त्वतो देहभाजः
संत्यज्यैतान्कुदेवांस्त्रिविधमलभृतो दीर्घसंसारहेतून् ।
विध्वस्ताशेषदोषं जिनपतिमखिलं प्राणिनामापदं तं
ये वन्दन्तेऽनवद्यं मदनमदनुदं ते लभन्ते सुखानि ॥ ६६१ ॥
हृष्टं नम्रेन्द्रमन्दश्लथमुकुटतटीकोटिविश्लिष्टपुष्प-
भ्राम्यद्भृङ्गौघघोषैर्जिनपतिनुतये व्याहराख्यैर्जिनस्य ।
पादद्वैतं प्रभूतं प्रसभभवभयाभ्रंसिभक्त्यात्तचित्तै-
स्तैराप्तोक्तं विमुक्त्यै पदमपदमथ व्यापदामाप्तमाप्तम् ॥ ६६२ ॥

नैषां दोषा मयोक्ता वचनपटु तथा द्वेषतो रागतो वा
किं त्वेषोऽत्र प्रयासो मम सकलविदं ज्ञातुमाप्तं विदोषम् ।
शक्तो बोद्धुं न चात्र त्रिभुवनहितकृद्विद्यमाने परत्र
भानुर्नोदेति यावन्निखिलमपि तमो नावधूतं हि तावत् ॥ ६६३ ॥

इत्याप्तविवेचनम् ॥ २६ ॥

जिनेश्वरक्रमयुगभक्तिभाविता विलोकितत्रिभुवनतत्त्वविस्तराः ।
षड्वतान् षडिह गुणांश्चरन्ति ये नमामि तान्भवरिपुभित्तयो गुरून् ॥ ६६४ ॥
समुद्यतास्तपसि जिनेश्वरोदिते वितन्वते निखिलहितानि निस्पृहाः ।
सदा नये मदनमदैरपाकृताः सुदुर्लभा जगति मुनीशिनोऽत्र ते ॥ ६६५ ॥
वचांसि ये शिवसुखदानि तन्वते प्रकुर्वते स्वपरपरिग्रहग्रहम् ।
विवर्जिताः सकलममत्वदूषणैः श्रयामि तानमलपदाप्तये यतीन् ॥ ६६६ ॥
न बान्धवस्वजनसुतप्रियादयो वितन्वते तमिह गुणं शरीरिणाम् ।
विभिन्दतो भवभयभूरिभूभृतां मुनीश्वरा विदधति यं कृपालवः ॥ ६६७ ॥
शरीरिणः कुलगुणमार्गणादितो विबुद्धये विदधति निर्मलां दयाम् ।
विभीरवो जननदुरन्तदुःखतो भजामि ताञ्जनकसमान्गुरून्सदा ॥ ६६८ ॥
वदन्ति ये वचनमनिन्दितं बुधैरपीडकं सकलशरीरधारिणाम् ।
मनोहरं रहितकषायदूषणं भवन्तु ते मम गुरवो विमुक्तये ॥ ६६९ ॥
न लाति यः स्थितपतितादिकं धनं पुराकरक्षितिधरकाननादिषु ।
त्रिधा तृणप्रमुखमदत्तमुत्तमो नमामि तं जननविनाशिनं गुरुम् ॥ ६७० ॥
त्रिधा स्त्रियः स्वसृजननीसुतासमा विलोक्यते कथनविलोकनादितः ।
पराङ्मुखाः शमितकषायशत्रवो यजामि तान्विषयविनाशिनो गुरून् ६७१
परिग्रहं''''द्विविधं त्रिधापि ये न गृह्यते च तनुमता विवर्जिताः ।
विनिर्मलस्थिरशिवसौख्यकाङ्क्षिणो भवन्तु ते मम गुरवो भवच्छिदः ॥ ६७२ ॥
विजन्तुके दिनकररश्मिभासिते व्रजन्ति ये पथि दिवसे युगेक्षणाः ।
स्वकार्यतः सकलशरीरधारिणां दयालवो ददति सुखानि तेऽङ्गिनाम् ६७३
दिगम्बरा मधुरमपैशुनं वचः श्रुतोदितं स्वपरहितावहं मितम् ।
ब्रुवन्ति ये गृहिजनजल्पनोज्झितं भवारितः शरणमितोऽस्मि तान्गुरून् ६७४

स्वतो मनोवचनशरीरनिर्मितं समाशयाः कटुकरसादिकेषु ये ।
न भुञ्जते परमसुखैषिणोऽशनं मुनीश्वरा मम गुरवो भवन्तु ते ॥ ६७५॥
शनैः पुरा विकृतिपुरःसरस्य ते विमोक्षणग्रहणविधिं वितन्वते ।
कृपापरा जगति समस्ति देहिनां धुनन्ति ते जननजराविपर्ययान् ॥६७६॥
सविस्तरे धरणितले विरोधके निरीक्ष्यते परजनता विनाकृते ।
त्यजन्ति ये तनुमलमङ्गिवर्जिते यतीश्वरा मम गुरवो भवन्तु ते ॥ ६७७॥
मनःकरी विषयवनानि लाषुको नियम्य यैः शमयमशृङ्खलैर्दृढम् ।
वशीकृतो मननिशिताङ्कुशैः सदा तपोधना मम गुरवो भवन्तु ते ॥६७८॥
न निष्ठुरं कटुमनवद्यवर्धनं वदन्ति ये वचनमनर्थमप्रियम् ।
समुद्यता जिनवचनेषु मौनिनो गुणैर्गुरून्प्रणमत तान्गुरून्सदा ॥ ६७९॥
न कुर्वते कलिलविवर्धकक्रियाः सदोद्यताः शमयमसंयमादिषु ।
रता न ये निखिलजनक्रियाविधौ भवन्तु ते मम हृदये कृतास्पदाः ६८०
शरीरिणामसुखशतस्य कारणं तपोदयाशमगुणशीलनाशनम् ।
जयन्ति ये धृतिवलतोऽक्षवैरिणं भवन्तु ते यतिवृषभा मुदे मम ॥ ६८१ ॥
वृषं चितं व्रतनियमैरनेकधा विनिर्मलस्थिरसुखहेतुमुत्तमम् ।
विधुन्वते झटिति कषायवैरिणो विनाशकानमलधियः स्तुवे गुरून् ॥ ६८२॥
विनिर्जिता हरिहरवह्निजादयो विभिन्दिता युवतिकटाक्षतोमरैः ।
मनोभुवा परमबलेन येन तं विभिन्दतो नमत गुरूञ्शमेषुभिः ॥ ६८३ ॥
न रागिणः क्वचन न रोषदूषिता न मोहिनो भवभयभेदनोद्यताः ।
गृहीतसन्मननचरित्रदृष्टयो भवन्तु मे मनसि मुदे तपोधनाः ॥ ६८४ ॥
सुखासुखस्वपरवियोगयोगिता प्रियाप्रियव्यपगतजीवितादिभिः ।
भवन्ति ये सममनसस्तपोधना भवन्तु ते मम गुरवो भवच्छिदः ॥६८५॥
जिनोदिते वचसि रता वितन्वते तपांसि ये कलिलकलङ्कमुक्तये ।
विवेचकाः स्वपरमवश्यतत्त्वतो हरन्तु ते मम दुरितं मुमुक्षवः ॥ ६८६ ॥
अवन्ति ये जनकसमा मुनीश्वराश्चतुर्विधं गणमनवद्यवृत्तयः ।
स्वदेहवद्दलितमदाष्टकारयो भवन्तु ते मम गुरवो भवान्तकाः ॥ ६८७ ॥

वदन्ति ये जिनपतिभाषितं वृषं वृषेश्वराः सकलशरीरिणां हितम् ।
भवाब्धितस्तरणमनर्थनाशनं नयन्ति ते शिवपदमाश्रितं जनम् ॥ ६८८ ॥
तनूभृतां नियमतपोव्रतानि ये दयान्विता ददति समस्तलब्धये ।
चतुर्विधो विनयपरागणे सदा दहन्ति ते दुरितवनानि साधवः ॥ ६८९ ॥

इति गुरुस्वरूपनिरूपणम् ॥ २७ ॥

अवति निखिललोकं यः पितेवादृतात्मा
दहति दुरितराशिं पावकेवेन्धनौघम् ।
वितरति शिवसौख्यं हन्ति संसारशत्रुं
विदधति शुभबुद्ध्या तं बुधा धर्ममत्र ॥ ६९० ॥
जननजलधिमज्जज्जन्तुनिर्व्याजमित्रं
विदधति जिनधर्मं ये नरा नादरेण ।
कथमपि नरजन्म प्राप्य पापोग्रशान्ते-
र्विमलमणिमनर्घ्यं प्राप्य ते वर्जयन्ति ॥ ६९१ ॥
वदति निखिललोकः शब्दमात्रेण धर्मं
विरचयति विचारं जातु नो कोऽपि तस्य ।
व्रजति विविधभेदं शब्दशाम्येऽपि धर्मो
जगति हि गुणतोयं क्षीरवत्तत्त्वतोऽत्र ॥ ६९२ ॥
सततविषयसेवाविह्वलीभूतचित्तः
शिवसुखफलदातृप्राण्यहिंसां विहाय ।
श्रयति पशुवधादि यो नरो धर्ममज्ञः
प्रपिबति विषमुग्रं सोऽमृतं वै विहाय ॥ ६९३ ॥
पशुवधपरयोषिन्मद्यमांसादिसेवा
वितरति यदि धर्मं सर्वकल्याणमूलम् ।
निगदितमतिमन्तो जायते केन पुंसां
विविधजनितदुःखा श्वभ्रभूर्निन्दनीया ॥ ६९४ ॥
विचरति गिरिराजो जायते शीतलोऽग्नि-
स्तरति पयसि शैलः स्याच्छशी तीव्रतेजाः ।

उदयति दिशि भानुः पश्चिमायां कदाचि-
न्न तु भवति कदाचिज्जीवघातेन धर्मः ॥ ६९५ ॥
विगलितधिषणोऽसावेकदा हन्ति जीवा-
न्वदति वितथवाक्यं द्रव्यमन्यस्य लाति ।
परयुवतिमपास्थे सङ्गमङ्गीकरोति
भवति न वृषमात्रोऽप्यत्र सन्तो वदन्ति ॥ ६९६ ॥
अपि कुपितमनस्के कोऽपि निष्पत्तिहेतुं
विदधति सति शत्रोर्विक्रियां चित्ररूपाम् ।
वदति वचनमुच्चैर्दुःश्रवं कर्कशादि
कलुषविकलतायां तां क्षमां वर्णयन्ति ॥ ६९७ ॥
व्रतकुलबलजातिज्ञानविज्ञानरूप-
प्रभृतिजमदमुक्तिर्या विनीतस्य साधोः ।
अनुपमगुणराशेः शीलचारित्रभाजः
प्रणिगदति विनीता मार्दवत्वं मुनीन्द्राः ॥ ६९८ ॥
कपटशतनदीष्णैर्वैरिभिर्वञ्चितोऽपि
निकृतिकरणदक्षोऽप्यत्र संसारभीरुः ।
तनुवचनमनोभिर्वक्रतां यो न याति
गतमलमृजु मानं तस्य साधोर्वदन्ति ॥ ६९९ ॥
मदमदनकषायप्रीतिभूत्यादिभूतं
वितथमवितथं च प्राणिवर्गोपतापि ।
श्रवणकटु विमुच्य स्वापदेभ्यो हितं य-
द्वचनमवितथं तत्कथ्यते तथ्यबोधौ ॥ ७०० ॥
दहति झटिति लोभो लाभतो वर्धमान-
स्तृणचयमिव वह्निर्यत्सुखं देहभाजाम् ।
व्रतगुणशमशीलध्वंसिनस्तस्य नाशः
प्रणिगदति मुमुक्षोः साधवः साधुशौचम् ॥ ७०१ ॥

विषयविरतियुक्तिर्याजिताक्षस्य साधो-
निखिलतनुमतां यद्रक्षणं स्यात्रिधापि ।
तदुभयमनवद्यं संयमं वर्णयन्ते
मननरविमरीचिध्वस्तमोहान्धकारः ॥ ७०२ ॥

गलितनिखिलसङ्गोऽनङ्गसङ्गे प्रवीणो
विमलमनसि पूतं कर्मनिर्नाशनाय ।
चरति चरितमर्च्यं संयतो यन्मुमुक्षु-
र्मथितसुकृतमाद्यास्तत्तपो वर्णयन्ति ॥ ७०३ ॥

जिनगदितमनर्थध्वंसि शास्त्रं विचित्रं
परममृतसमं यत्सर्वसत्त्वोपकारि ।
प्रकटनमिह तस्य प्राणिनां यद्वृषाय
तमभिदधति शान्तास्त्यागधर्मं यतीन्द्राः ॥ ७०४ ॥

यदिह जहति जीवा जीवजीवोऽत्यभेदा-
त्रिविधमपि मुनीन्द्रा सङ्गमङ्गेऽप्यसङ्गाः ।
जननमरणभीता जन्तुदीक्षानदीष्णा
गतमलमनसस्तत्स्यात्सदाकिंचनत्वम् ॥ ७०५ ॥

वरतनुरतिमुक्तेवर्क्ष्यमाणस्य नारीः
स्वसृदुहितृसवित्रीसंनिभाः सर्वदैव ।
जननमरणभीतेः कूर्मवत्संवृतस्य
गुरुकुलवसतिर्या ब्रह्मचर्यं तदाहुः ॥ ७०६ ॥

जननमरणभीतिध्यानविध्वंसदक्षं
कषितनिखिलदोषं भूषणं देहभाजाम् ।
इति दशविधमेनं धर्ममेनोविमुक्त-
विदितभुवनतत्त्वा वर्णयन्ते जिनेन्द्राः ॥ ७०७ ॥

हरति जननदुःखं मुक्तिसौख्यं विधत्ते
रचयति शुभबुद्धिं पापबुद्धिं धुनीते ।

अवति सकलजन्तून्कर्मशत्रून्निहन्ति
प्रशमयति मनोर्यस्तं बुधा धर्ममाहुः ॥ ७०८ ॥
विषयरतिविमुक्तिर्यत्र दानानुरक्तिः
शमयमदमशक्तिर्मन्मथारातिभक्तिः ।
जननमरणभीतिर्द्वेषरागावधूति-
र्भजति तमिह धर्मं कर्मनिर्मूलनाय ॥ ७०९ ॥
गुणितनुमतितुष्टिं मित्रतां शत्रुवर्गं
गुरुचरणविनीतिं तत्त्वमार्गप्रणीतिम् ।
जिनपदपदभक्तिं दूषणानां तु मुक्तिं
विदधति सति जन्तौ धर्ममुत्कृष्टमाहुः ॥ ७१० ॥
मनति मनसि यः सज्ज्ञानचारित्रदृष्टी
शिवपदसुखहेतून्दीर्घसंसारसेतून् ।
परिहरति च मिथ्याज्ञानचारित्रदृष्टी
भवति विगतदोषस्तस्य मर्त्यस्य धर्मः ॥ ७११ ॥

इति धर्मनिरूपणम् ॥ २८ ॥

पुरुषस्य विनश्यति येन सुखं वपुरेति कृशत्वमुपैत्यबलम् ।
मृतिमिच्छति मूर्च्छति शोकवशस्त्यजतैनमतस्त्रिविधेन बुधाः ॥ ७१२ ॥
वितनोति वचः करुणं विमना विधुनोति करौ चरणौ च भृशम् ।
रमते न गृहे न वने न जने पुरुषः कुरुते न किमत्र शुचा ॥ ७१३ ॥
उदितः समयः श्रयतेऽस्तमयं कृतकः सकलो लभते विलयम् ।
सकलानि फलानि पतन्ति तरोः सकला जलधिं समुपैति नदी ॥ ७१४ ॥
सकलं सरसं सुखमेति यथा सकलः पुरुषो मृतिमेति तथा ।
मनसेति विचिन्त्य बुधो न शुचं विदधाति मनागपि तत्त्वरुचिः ॥ ७१५ ॥
स्वजनोऽन्यजनः कुरुते न सुखं न धनं न वृषो विषयो न भवेत् ।
विमतेः स्वहितस्य शुचा भविनः स्तुतिमस्य न कोऽपि करोति बुधः ॥ ७१६ ॥
स्वकरार्पितवासकपोलतलो विगते च मृते च तनोति शुचम् ।
भुवि यः सदने दहनेन हते खनतीह स कूपमपास्तमतिः ॥ ७१७ ॥

यदि रक्षणमन्यजनस्य भवेद्यदि कोऽपि करोति बुधः स्तवनम् ।
यदि किंचन सौख्यमथ स्वतनोर्यदि कश्चन तस्य गुणो भवति ॥ ७१८॥
यदि वागमनं कुरुतेऽत्र मृतः स्वगुणं तु विशोचनमस्य तदा ।
विगुणं विमना बहु शोचति यो विगुणां सदृशां लभते मनुजः ॥ ७१९ ॥
पथि पान्थगणस्य यथा व्रजतो भवति स्थितिरस्थितिरेव तरौ ।
जननाध्वनि जीवगणस्य तथा जननं मरणं च सदैव कुले ॥ ७२० ॥
बहुदेशसमागतपान्थगणः प्लवमेकमिवैति नदीतरणे ।
बहुदेशसमागतजन्तुगणः कुलमेति पुनः सुकृतेन भवे ॥ ७२१ ॥
हरिणस्य यथा भ्रमतो गहने शरणं न हरेः पतितस्य मुखे ।
समवर्तिमुखे पतितस्य तथा शरणं बत कोऽपि न देहवतः ॥ ७२२ ॥
सगुणं विगुणं सधनं विधनं सवृषं विवृषं तरुणं च शिशुम् ।
वनमध्यगताग्निसमोऽकरुणः समवर्तिनृपो न परित्यजति ॥ ७२३ ॥
भुवि यान्ति हयद्विपमर्त्यजना गगने शकुनिग्रहशीतकराः ।
जलजन्तुगणाश्च जले बलवान्समवर्तिविभुर्निखिले भुवने ॥ ७२४ ॥
विषयः स समस्ति न यत्र रविर्न शशी न शिखी पवनं न तथा ।
न स कोऽपि न यत्र कृतान्तनृपः सकलाङ्गिविनाशकरः प्रबलः॥ ७२५ ॥
इति तत्त्वधियः परिचिन्त्य बुधाः सकलस्य जनस्य विनश्वरताम् ।
न मनागपि चेतसि संदधते शुचमङ्ग यशःसुखनाशकरम् ॥ ७२६ ॥
धनपुत्रकलत्रवियोगकरो धनपुत्रकलत्रवियोगमिह ।
लभते मनसेति विचिन्त्य बुधः परिमुञ्चतु शोकमनर्थकरम् ॥ ७२७ ॥
यदि पुण्यशरीरसुखे लभते यदि शोककृतौ पुनरेति मृतः ।
यदि वास्य मृतौ स्वमृतिर्भविता पुरुषस्य शुचात्र तदा सफलम् ॥ ७२८ ॥
अनुशोचनमस्तविचारमना विगतस्य मृतस्य च यः कुरुते ।
स गते सलिले तनुते वरणं भुजगस्य गतस्य गतिः क्षिपति ॥ ७२९ ॥
सुरवर्त्म सुमुष्टिहतं कुरुते सिकतोत्करपीडनमातनुते ।
श्रममात्मगतं न विचिन्त्य नरो भुवि शोचति यो मृतमस्तमतिः ॥ ७३० ॥

त्यजति स्वयमेव शुचं प्रवरः सुवचःश्रवणेन च मध्यमनाः ।
निखिलाङ्गिविनाशकशोकहतो मरणं समुपैति जघन्यजनः ॥ ७३१ ॥
स्वयमेव विनश्यति शोककलिर्जननस्थितिभङ्गविदो गुणिनः ।
नयनोत्थजलेन च मध्यधियो मरणेन जघन्यमतेर्भविनः ॥ ७३२ ॥
विनिहन्ति शिरो वपुरार्तमना बहु रोदिति दीनवचाः कुशलः ।
कुरुते मरणार्थमनेकविधिं पुरशोकसमाकुलधीररवः ॥ ७३३ ॥
बहुरोदनताम्रतराक्षियुगः परिरूक्षशिरोरुहभीमतनुः ।
कुरुते सकलस्य जनस्य शुचा पुरुषो भयमत्र पिशाचसमः ॥ ७३४ ॥
परिधावति रोदिति पूत्कुरुते पतति स्खलति त्यजते वसनम् ।
व्यथते श्लथते लभते न सुखं गुरुशोकपिशाचवशो मनुजः ॥ ७३५ ॥
क जपः क तपः क सुखं क शमः क यमः क दमः क समाधिविधिः ।
क धनं क बलं क गृहं क गुणो वत शोकवशस्य नरस्य भवेत् ॥ ७३६ ॥
न धृतिर्न मतिर्न गतिर्न रतिर्न यतिर्न नतिर्न नुतिर्न रुचिः ।
पुरुषस्य गतस्य हि शोकवशं व्यपयाति सुखं सकलं सहसा ॥ ७३७ ॥
ददाति योऽन्यत्र भवे शरीरिणामनेकधा दुःखमसह्यमायतम् ।
इहैव कृत्वा बहु दुःखपद्धतिं स सेव्यते शोकरिपुः कथं बुधैः ॥७३८॥

पूर्वोपार्जितपापपाकवशतः शोकः समुत्पद्यते
धर्मात्सर्वसुखाकराज्जिनमतान्नश्यत्ययं तत्त्वतः ।
विज्ञायेति समस्तदुःखसकलामूलो भवोर्वीरुहः
संसारस्थितिवेदिभिर्बुधजनैः शोकस्त्रिधा त्यज्यते ॥ ७३९ ॥

इति शोकनिरूपणम् ॥ २९ ॥

संसारसागरमपारमतीत्य पूतं
मोक्षं यदि व्रजितुमिच्छत मुक्तबाधाम् ।
तज्ज्ञानवारिणि विधूतमले मनुष्याः
स्नानं कुरुध्वमपहाय जलभिषेकम् ॥ ७४० ॥
तीर्थेषु शुध्यति जलैः शतशोऽपि धौतं
नान्तर्गतं विविधपापमलावलिप्तम् ।

चित्तं विचिन्त्य मनसेति विशुद्धबोधाः
सम्यक्त्वपूतसलिलैः कुरुताभिषेकम् ॥ ७४१ ॥
तीर्थाभिषेककरणाभिरतस्य बाह्यो
नश्यत्ययं सकलदेहमलो नरस्य ।
नान्तर्गतं कलिलमित्यवधार्य सोऽन्त-
श्चारित्रवारिणि निमज्जति शुद्धहेतोः ॥ ७४२ ॥
सज्ज्ञानदर्शनचरित्रजलं क्षमोर्मि
कुज्ञानदर्शनचरित्रमलावमुक्तम् ।
यत्सर्वकर्ममलमुज्जिनवाक्यतीर्थं
स्नानं विदध्वमिह नास्ति जलेन शुद्धिः ॥ ७४३ ॥
तीर्थेषु चेत्क्षयमुपैति समस्तपापं
स्नानेन तिष्ठति कथं पुरुषस्य पुण्यम् ।
नैकस्य गन्धमलयोर्धुतयोः शरीरं
दृष्टा स्थितिः सलिलशुद्धिविधौ समाने ॥ ७४४ ॥
तीर्थाभिषेकवशतः सुगतिं जगत्यां
पुण्यैर्विनापि यदि यान्ति नरास्तदेतः ।
नानाविधोदकसमुद्भवजन्तुवर्गा
बालत्वचारुमरणान्न कथं व्रजन्ति ॥ ७४५ ॥
यच्छुक्रशोणितसमुत्थमनिष्टगन्धं
नानाविधक्रमिकुलाकुलितं समन्तात् ।
व्याध्यादिदोषमलसद्म विनिन्दनीयं
तद्वारितः कथमिहर्च्छति शुद्धिमङ्गम् ॥ ७४६ ॥
गर्भेऽशुचौ कृमिकुलैर्निचिते शरीरं
यद्वर्धितं मलरसेन नवेह मासान् ।
वर्चोगृहे कृमिरिवातिमलावलिप्ते
शुद्धिः कथं भवति तस्य जलप्लुतस्य ॥ ७४७ ॥

निन्द्येन वागविषयेण विनिःसृतस्य
न्यूनोन्नतेन कुथितादिभृतस्य गर्भे।
मासान्नवाशुचिगृहे वपुषः स्थितस्य
शुद्धिं प्लुतस्य न जलैः शतशोऽपि सर्वैः॥ ७४८॥
यन्निर्मितं कुथिततः कुथितेन पूर्णं
श्रोत्रैः सदा क्वथितमेव विमुञ्चतेऽङ्गम्।
प्रक्षाल्यमानमपि मुञ्चति रोमकूपैः
प्रस्वेदवारि कथमस्य जलेन शुद्धिः॥ ७४९॥
दुःखेन शुध्यति मशीवटिका यथा नो
दुःखं तु जातु मलिनत्वमिति स्वरूपम्।
नाङ्गं विशुध्यति तथा सलिलेन धौतं
पानीयमेति नु मलीमसतां समस्तम्॥ ७५०॥
आकाशतः पतितमेत्य नदादिमध्यं
तत्रापि धावनसमुत्थमलावलिप्तम्।
नानाविधावनिगताशुचिपूर्णमर्णो
यत्तेन शुद्धिमुपयाति कथं शरीरम्॥ ७५१॥
मालाम्बराभरणभोजनमानिनीनां
लोकातिशायिकमनीयगुणान्वितानाम्।
हानिं गुणाज्झटिति यान्ति यमाश्रितानां
देहस्य तस्य सलिलेन कथं विशुद्धिः॥ ७५२॥
जन्त्विन्द्रियालमिदमत्र जलेन शौचं
केनापि दुष्टमतिना कथितं जनानाम्।
यद्देहशुद्धिमपि कर्तुमलं जलं नो
तत्पापकर्म विनिहन्ति कथं हि सन्तः॥ ७५३॥
मेरूपमानमधुपव्रजसेवितान्तं
चेज्जायते वियति कञ्जमनन्तपत्रम्।
कायस्य जातु जलतो मलपूरितस्य
शुद्धिस्तदा भवति निन्द्यमलोद्भवस्य॥ ७५४॥

किं भाषितेन बहुना न जलेन शुद्धि-
र्जन्मान्तरेण भवतीति विचिन्त्य सन्तः।
त्रेधा विमुच्य जलधौतकृताभिमानं
कुर्वन्तु बोधसलिलेन शुचित्वमत्र ॥ ७५५ ॥

दुष्टाष्टकर्ममलशुद्धिविधौ समर्थे
निःशेषलोकभवतापविघातदक्षे।
सज्ज्ञानदर्शनचरित्रजले विशाले
शौचं विदध्वमपि विध्य जलाभिषेकम् ॥ ७५६ ॥

निःशेषपापमलबाधनदक्षमर्च्यं
ज्ञानोदकं विनयशीलतटद्वयाढ्यम्।
चारित्रवीचिनिचयं मुदितामलत्वं
मिथ्यात्वमीनविकलं करुणाद्यगाधम् ॥ ७५७ ॥

सम्यक्त्वशीलमनघं जिनवाक्यतीर्थं
यत्तत्र चारुधिषणाः कुरुताभिषेकम्।
तीर्थाभिषेकवशतो मनसः कदाचि-
न्नान्तर्गतस्य हि मनागपि शुद्धबुद्धिः ॥ ७५८ ॥

चित्तं विशुद्ध्यति जलेन मलावलिप्तं
यो भाषतेऽनृतपरोऽस्ति जनो न यस्मात्।
बाह्यं मलं तनुगतं व्यपहन्ति नीरं
गन्धं शुभेतरमपीति वदन्ति सन्तः ॥ ७५९ ॥

वार्यग्निभस्मरविमन्त्रधरादिभेदा-
च्छुद्धिं वदन्ति बहुधा भुवि किंतु पुंसाम्।
सुज्ञानशीलशमसंयमशुद्धितोऽन्या
नो पापलेपमपहन्तु मलं विशुद्धिः ॥ ७६० ॥

रत्नत्रयामलजलेन करोति शुद्धिं
श्रुत्वा जिनेन्द्रमुखनिर्गतवाक्यतीर्थम्।

योऽन्तर्गतं निखिलकर्ममलं दुरन्तं
प्रक्षाल्य मोक्षसुखमप्रतिमं स याति ॥ ७६१ ॥

इति शौचनिरूपणम् ॥ ३० ॥

श्रीमज्जिनेश्वरं नत्वा सुरासुरनमस्कृतम् ।
श्रुतानुसारतो वक्ष्ये व्रतानि गृहमेधिनाम् ॥ ७६२ ॥
पञ्चधाणुव्रतं त्रेधा गुणव्रतमुदीरितम् ।
शिक्षाव्रतं चतुर्धा स्यादिति द्वादशधा स्मृतम् ॥ ७६३ ॥
शुद्धीन्द्रियाणि भेदेषु चतुर्धात्र सकायकाः ।
विज्ञाय रक्षणं तेषामहिंसाणुव्रतं मतम् ॥ ७६४ ॥
मद्यमांसमधुक्षीरक्षोणीरुहफलाशनम् ।
वर्जनीयं सदा सद्भिस्त्रसरक्षणतत्परैः ॥ ७६५ ॥
हिंस्यन्ते प्राणिनः सूक्ष्म्या यत्राशुच्यभिभक्षति ।
तद्रात्रिभोजनं सन्तो न कुर्वन्ति दयापराः ॥ ७६६ ॥
भेषजातिथिमन्त्रादिनिमित्तेनापि नाङ्गिनः ।
प्रथमाणुव्रताशक्तैर्हिंसनीयाः कदाचन ॥ ७६७ ॥
यतो निःशेषतो हन्ति स्थावरान्परिणामतः ।
त्रसान्पलायते ज्ञेयो विरताविरतस्ततः ॥ ७६८ ॥
क्रोधलोभमदद्वेषरागमोहादिकारणैः ।
असत्यस्य परित्यागः सत्याणुव्रतमुच्यते ॥ ७६९ ॥
प्रवर्तन्ते यतो दोषा हिंसारम्भभया दयाः ।
सत्यमपि न वक्तव्यं तद्वचः सत्यशालिभिः ॥ ७७० ॥
हासकर्कशपैशून्यनिष्ठुरादिवचोमुचः ।
द्वितीयाणुव्रतं पूतं देहिनो लभते स्थितिम् ॥ ७७१ ॥
यद्वदन्ति शठा धर्मं यन्म्लेच्छेष्वपि निन्दितम् ।
वर्जनीयं त्रिधा वाक्यमसत्यं तद्धितोद्यतैः ॥ ७७२ ॥
ग्रामादौ पतितस्याल्पप्रभृतेः परवस्तुनः ।
आदानं न त्रिधा यस्य तृतीयं तदणुव्रतम् ॥ ७७३ ॥

इह दुःखं नृपादिभ्यः परत्र नरकादितः ।
प्राप्नोति स्तेयतस्तेन स्तेयं त्याज्यं सदा बुधैः ॥ ७७४ ॥
जीवन्ति प्राणिनो येन द्रव्यतः सह बन्धुभिः ।
जीवितव्यं ततस्तेषां हरेत्तस्यापहारतः ॥ ७७५ ॥
येऽप्यहिंसादयो धर्मास्तेऽपि नश्यन्ति चौर्यतः ।
मत्वेति न त्रिधा ग्राह्यं परद्रव्यं विचक्षणैः ॥ ७७६ ॥
अर्था बहिश्चराः प्राणाः प्राणिनां येन सर्वथा ।
परद्रव्यं ततः सन्तः पश्यन्ति सदृशं मृदा ॥ ७७७ ॥
मातृस्वसृसुतातुल्या निरीक्ष्य परयोषितः ।
स्वकलत्रेण यस्तोषश्चतुर्थं तदणुव्रतम् ॥ ७७८ ॥
यार्गला स्वर्गमार्गस्य सरणिः श्वभ्रसद्मनि ।
कृष्णाहिदृष्टिवद्द्रोही दुःस्पर्शाग्निशिखेव या ॥ ७७९ ॥
दुःखानां विधिरन्यस्त्री सुखानां प्रलयानलः ।
व्याधिवद्दुःखवत्त्याज्या दूरतः सा नरोत्तमैः ॥ ७८० ॥
स्वभर्तारं परित्यज्य या परं याति निस्त्रपा ।
विश्वासं श्रयते तस्यां कथमन्यः स्वयोषिति ॥ ७८१ ॥
किं सुखं लभते मर्त्यः सेवमानः परस्त्रियम् ।
केवलं कर्म बध्नाति श्वभ्रभूम्यादिकारणम् ॥ ७८२ ॥
वर्चःसदनवत्तस्या जल्पने जघने तथा ।
निक्षिपन्ति मलं निन्द्यं निन्दनीया जनाः सदा ॥ ७८३ ॥
मद्यमांसादिसक्तस्य या विधाय विडम्बनम् ।
नीचस्यापि मुखं न्यस्ते दीना द्रव्यस्य लोभतः ॥ ७८४ ॥
तां वेश्यां सेवमानस्य मन्मथाकुलचेतसः ।
तन्मुखं चुम्बतः पुंसः कथं तस्याप्यणुव्रतम् ॥ ७८५ ॥
ततोऽसौ पण्यरमणी चतुर्थव्रतपालिना ।
यावज्जीवं परित्याज्या जातनिर्घृणमानसा ॥ ७८६ ॥
सद्मस्वर्णधराधान्यधेनुभृत्यादिवस्तुनः ।

या गृहीतिः प्रमाणेन पञ्चमं तदणुव्रतम् ॥ ७८७ ॥
दावानलसमो लोभो वर्धमानो दिवानिशम् ।
विधाप्य श्रावकैः सम्यक्संतोषो(?) ज्ञाढवारिणा ॥ ७८८ ॥
*संतोषाश्लिष्टचित्तस्य यत्सुखं शाश्वतं शुभम् ।*
कुतस्तृष्णागृहीतस्य तस्य लेशोऽपि विद्यते ॥ ७८९ ॥
यावत्परिग्रहं लाति तावद्धिंसोपजायते ।
विज्ञायेति विधातव्यं सङ्गः परिमितो बुधैः ॥ ७९० ॥
हिंसातो विरतिः सत्यमदत्तपरिवर्जनम् ।
स्वस्त्रीरतिः प्रमाणं च पञ्चधाणुव्रतं मतम् ॥ ७९१ ॥
यद्विधायावधिं दिक्षु दशस्वपि निजेच्छया ।
नाक्रामति पुनः प्रोक्तं प्रथमं तद्गुणं व्रतम् ॥ ७९२ ॥
वात्येव धावमानस्य निरवस्थस्य चेतसः ।
अवस्थानं कृतं तेन येन सा नियतिः कृता ॥ ७९३ ॥
त्रसस्थावरजीवानां रक्षातः परतस्ततः ।
महाव्रतत्वमित्येवं श्रावकस्यापि तत्त्वतः ॥ ७९४ ॥
चेतो निवारितं येन धावमानमितस्ततः ।
किं न लब्धं सुखं तेन संतोषामृतलाभतः ॥ ७९५ ॥
यदि विज्ञानतः कृत्वा देशावधिमहर्निशम् ।
नोल्लङ्घ्यते पुनः पुंसां द्वितीयं तद्गुणव्रतम् ॥ ७९६ ॥
महाव्रतत्वमत्रापि वाच्यं तत्त्वविधानतः ।
परतो लोभनिर्मुक्तो लाभे सत्यपि तत्त्वतः ॥ ७९७ ॥
शक्यते गदितुं केन सत्यं तस्य महात्मनः ।
तृणवत्त्यज्यते येन लब्धोऽप्यर्थो व्रतार्थिना ॥ ७९८ ॥
लूता तृष्णालतास्तेन वर्धिता धृतिवल्लरी ।
देशतो विरतिर्येन कृता नित्यमखण्डिता ॥ ७९९ ॥
पञ्चधानर्थदण्डस्य परं पापोपकारिणः ।
क्रियते यः परित्यागस्तृतीयं तद्गुणव्रतम् ॥ ८०० ॥

दुष्टश्रुतिरपध्यानं पापकर्मोपदेशनम् ।
प्रमादः शस्त्रदानं च पञ्चानर्था भवन्त्यमी ॥ ८०१ ॥
शारिकाशिखिमार्जारताम्रचूडशुकादयः ।
अनर्थकारिणस्त्याज्या बहुदोषा मनीषिभिः ॥ ८०२ ॥
नीलीमदनलाक्षायःप्रभूताग्निविषादयः ।
अनर्थकारिणस्त्याज्या बहुदोषा मनीषिभिः ॥ ८०३ ॥
दिग्देशानर्थदण्डेभ्यो विरतिर्या विधीयते ।
जिनेश्वरसमाख्यातं त्रिविधं तद्गुणव्रतम् ॥ ८०४ ॥
नमस्कारादिकं ज्ञेयं शरणोत्तममङ्गलम् ।
संध्यानत्रितये शश्वदेकाग्रकृतचेतसा ॥ ८०५ ॥
सर्वारम्भं परित्यज्य कृत्वा द्रव्यादिशोधनम् ।
आवश्यकं विधातव्यं व्रतशुद्ध्यर्थमुत्तमैः ॥ ८०६ ॥
द्व्यासनद्वादशावर्ताश्चतुर्मस्तकसंनतिः ।
त्रिविशुद्ध्या विधातव्या वन्दना स्वहितोद्यतैः ॥ ८०७ ॥
चत्वारि सन्ति पर्वाणि मासे तेषु विधीयते ।
उपवासः सदा यस्तत्प्रौषधव्रतमीर्यते ॥ ८०८ ॥
त्यक्तभोगोपभोगेऽस्य सर्वारम्भविमोचिनः ।
चतुर्विधाशनत्याग उपवासो मतो जिनैः ॥ ८०९ ॥
अभुक्त्यनुपवासैकभुक्तयो भक्तितत्परैः ।
क्रियन्ते कर्मनाशाय मासे पर्वचतुष्टये ॥ ८१० ॥
कर्मेन्धनं यदज्ञानात्संचितं जन्म कानने ।
उपवासशिखी सर्वं तद्भस्मीकुरुते क्षणात् ॥ ८११ ॥
भोगोपभोगसंख्यानं क्रियते यद्धितात्मना ।
भोगोपभोगसंख्यानं तच्छित्त्या व्रतमुच्यते ॥ ८१२ ॥
आहारपानताम्बूलगन्धमाल्यफलादयः ।
भुज्यन्ते यत्सभोगश्च तन्मतः साधुसत्तमैः ॥ ८१३ ॥
वाहनाशनपल्यङ्कस्त्रीवस्त्राभरणादयः ।

भुज्यन्तेऽनेकधा यस्मादुपभोगाय ते मताः ॥ ८१४ ॥
सन्तो यो भाषितस्तेन वैराग्यमपि दर्शितम् ।
भोगोपभोगसंख्यानं व्रतं येन स धार्यते ॥ ८१५ ॥
चतुर्विधो वराहारो दीयते संयतात्मनाम् ।
शिक्षाव्रतं तदाख्यातं चतुर्थं गृहमेधिनाम् ॥ ८१६ ॥
स्वयमेव गृहं साधुर्योत्रात(न्व)तति संयतः ।
अन्वर्थवेदिभिः प्रोक्तः सोऽतिथिर्मुनिपुंगवैः ॥ ८१७ ॥
श्रद्धामुत्सत्वविज्ञानतितिक्षाभक्त्यलुब्धता ।
एते गुणा हितोद्युक्तैर्ध्रियन्तेऽतिथिपूजनैः ॥ ८१८ ॥
प्रतिग्रहोच्चदेशाङ्घ्रिक्षालनं पूजनं नतिः ।
त्रिशुद्धिरन्नशुद्धिश्च पुण्याय नवधा विधिः ॥ ८१९ ॥
सामायिकादिभेदेन शिक्षाव्रतमुदीरितम् ।
चतुर्धेति गृहस्थेन रक्षणीयं हितैषिणा ॥ ८२० ॥
द्वादशाणुव्रतान्येवं कथितानि जिनेश्वरैः ।
गृहस्थैः पालनीयानि भवदुःखं जिहासुभिः ॥ ८२१ ॥
स्वकीयं जीवितं ज्ञात्वा त्यक्त्वा सर्वां मनःक्षितिम् ।
बन्धूनापृच्छ्य निःशेषांस्त्यक्त्वा देहादिमूर्छनाम् ॥ ८२२ ॥
बाह्यमभ्यन्तरं सङ्गं मुक्त्वा सर्वं विधानतः ।
विधायालोचनां शुद्धां हृदि न्यस्य नमस्कृतिम् ॥ ८२३ ॥
जिनेश्वरक्रमाम्भोजभूरिभक्तिभरानतैः ।
सल्लेखना विधातव्या मृत्युतो नरसत्तमैः ॥ ८२४ ॥
दुर्लभं सर्वदुःखानां नाशकं बुधपूजितम् ।
सम्यक्त्वं रत्नवद्धार्यं संसारान्तं यियासुभिः ॥ ८२५ ॥
षड्द्रव्याणि पदार्थांश्च नवतत्त्वादिभेदतः ।
जायते श्रद्दधज्जीवः सम्यग्दृष्टिर्न संशयः ॥ ८२६ ॥
अतीतेऽनन्तशः काले जीवेन भ्रमता भवे ।
कानि दुःखानि नाप्तानि विना जैनेन्द्रशासनम् ॥ ८२७ ॥

निर्ग्रन्थं निर्मलं तथ्यं पूतं जैनेन्द्रशासनम् ।
मोक्षवर्त्मेति कर्तव्या मतिस्तेन विचक्षणैः ॥ ८२८ ॥
ज्योतिर्भावनभौमेषु षट्स्वधः श्वभ्रभूमिषु ।
जायते स्त्रीषु सदृष्टिर्न मिथ्या द्वादशाङ्गिषु ॥ ८२९ ॥
एकमपि क्षणं लब्ध्वा सम्यक्त्वं यो विमुञ्चति ।
संसारार्णवमुत्तीर्य लभते सोऽपि निर्वृतिम् ॥ ८३० ॥
रोचते दर्शितं तत्त्वं जीवः सम्यक्त्वभावितः ।
संसाराद्वेगमापन्नः संवेगादिगुणान्वितः ॥ ८३१ ॥
यत्किंचिद्दृश्यते लोके प्रशस्तं सचराचरम् ।
तत्सर्वं लभते जीवः सम्यक्त्वामलरत्नयः ॥ ८३२ ॥
शङ्कादिदोषनिर्मुक्तं संवेगादिगुणान्वितम् ।
यो धत्ते दर्शनं सोऽत्र दर्शनी कथितो जिनैः ॥ ८३३ ॥
दुरन्तासारसंसारजनितासातसंततेः ।
यो भीतोऽणुव्रतं याति व्रतिनं तं विदुर्बुधाः ॥ ८३४ ॥
आर्तरौद्रपरित्यक्तस्त्रिकालं विदधाति यः ।
सामायिकं विशुद्धात्मा स सामायिकवान्मतः ॥ ८३५ ॥
मासे चत्वारि पर्वाणि तेषु यः कुरुते सदा ।
उपवासं निरारम्भः प्रोषधीः स मतो जिनैः ॥ ८३६ ॥
न भक्षयति योऽपक्कं कन्दमूलफलादिकम् ।
संयमासक्तचेतस्कः सचित्तात्स पराङ्मुखः ॥ ८३७ ॥
मैथुनं भजते मर्त्यो न दिवा यः कदाचन ।
दिवामैथुननिर्मुक्तः स बुधैः परिकीर्तितः ॥ ८३८ ॥
संसारभयमापन्नो मैथुनं भजते न यः ।
सदा वैराग्यमारूढो ब्रह्मचारी स भण्यते ॥ ८३९ ॥
निरारम्भः स विज्ञेयो मुनीन्द्रैर्हतकल्मषैः ।
कृपालुः सर्वजीवानां नारम्भं विदधाति यः ॥ ८४० ॥

संसारद्रुममूलेन किमनेन ममेति यः ।
निःशेषं त्यजति ग्रन्थं निर्ग्रन्थं तं विदुर्जिनाः ॥ ८४१ ॥
सर्वदा पापकार्येषु कुरुते नु मतिं न यः ।
तेनानुमननं युक्तं भण्यते बुद्धिशालिना ॥ ८४२ ॥
स्वनिमित्तं त्रिधा येन कारितोऽनुमतः कृतः ।
नाहारो गृह्यते पुंसा त्यक्तोद्दिष्टः स भण्यते ॥ ८४३ ॥
एकादश गुणानेवं धत्ते यः क्रमतो नरः ।
मर्त्यामरश्रियं भुक्त्वा यात्यसौ मोक्षमव्ययम् ॥ ८४४ ॥
वधो रोधोऽन्नपानस्य गुरुभारातिरोहणम् ।
बन्धच्छेदौ मलापं च प्रथमव्रतगोचराः ॥ ८४५ ॥
कूटलेखक्रिया मिथ्या देशनं न्यासलोपनम् ।
पैशून्यं मन्त्रभेदश्च द्वितीयव्रतगा मलाः ॥ ८४६ ॥
स्तेनानीतसमादानं स्तेनानामनुयोजनम् ।
विरुद्धेति क्रमो राज्ये कूटमानादिकल्पनम् ॥ ८४७ ॥
कृत्रिमव्यवहारश्च तृतीयव्रतसंभवाः ।
अतिचारा जिनैः पञ्च गदिता धुतकर्मभिः ॥ ८४८ ॥
अनङ्गसेवनं तीव्रमन्मथाभिनिवेशनम् ।
गमनं पुंश्चलीनार्योः स्वीकृतेतररूपयोः ॥ ८४९ ॥
अन्यदीयविवाहस्य विधानं जिनपुंगवैः ।
अतिचारा मताः पञ्च चतुर्थव्रतसंभवाः ॥ ८५० ॥
हिरण्यस्वर्णयोर्वास्तुक्षेत्रयोर्धनधान्ययोः ।
कुप्यस्य दासदास्योश्च प्रमाणेति क्रमाद्विधा ॥ ८५१ ॥
अतिचारा जिनैः प्रोक्ताः पञ्चामी पञ्चमे व्रते ।
वर्जनीयाः प्रयत्नेन व्रतरक्षाविचक्षणैः ॥ ८५२ ॥
क्षेत्रस्य वर्धनं तिर्यगूर्ध्वाधोव्यतिलङ्घनम् ।
स्मृत्यन्तरविधिः पञ्च मता दिग्विरतेर्मलाः ॥ ८५३ ॥

अनीतिपुद्गलक्षेपाः प्रेक्ष्य लोकानुयोजनम् ।
शब्दरूपानुपातौ च स्युर्देशविरतेर्मलाः ॥ ८५४ ॥
असमीक्षक्रियाभोगोपभोगानर्थकारिता ।
बहुसंबन्धभाषित्वं कौत्कुच्यं मदनार्द्रता ॥ ८५५ ॥
पञ्चैतेऽनर्थदण्डस्य विरतेः कथिता मलाः ।
समस्तवस्तुविस्तारवेदिभिर्जिनपुंगवैः ॥ ८५६ ॥
अस्थिरत्वास्मृतं योगदुष्क्रियानादरा मलाः ।
सामायिकव्रतस्यैते मताः पञ्च जिनेश्वरैः ॥ ८५७ ॥
अदृष्टमार्जितोत्सर्गादानसंस्तरकक्रियाम् ।
अस्मृत्वानादरौ पञ्च प्रोषधस्य मला मताः ॥ ८५८ ॥
सचित्तमिश्रसंबन्धदुष्पक्वामिषवासिता ।
भोगोपभोगसंख्याया मलाः पञ्च निवेदिताः ॥ ८५९ ॥
सचित्ताच्छादनिक्षेपकालातिक्रममत्सराः ।
सहान्यव्यपदेशेन दाने पञ्च मला मताः ॥ ८६० ॥
पञ्चत्वजीविताशंसो मित्ररागसुखाग्रहः ।
निदानं चेति निर्दिष्टं संन्यासे मलपञ्चकम् ॥ ८६१ ॥
शङ्काकाङ्क्षाचिकित्सादिप्रशंसासंस्तवा मलाः ।
पञ्चमे दर्शनस्योक्ता जिनेन्द्रैर्धुतकल्मषैः ॥ ८६२ ॥
इत्येवं सप्ततिः प्रोक्ता मलानाममलाशयैः ।
तस्य व्युदासतो धार्यं श्रावकैर्व्रतमुत्तमम् ॥ ८६३ ॥
यो दधाति नरो पूतं श्रावकव्रतमर्चितम् ।
मर्त्यामरश्रियं प्राप्य यात्यसौ मोक्षमव्ययम् ॥ ८६४ ॥
भ्रूनेत्राङ्गुलिहुंकारशिरःसंख्याद्यपाकृतम् ।
कुर्वद्भिर्भोजनं कार्यं श्रावकैर्मौनमुत्तमम् ॥ ८६५ ॥
शरच्चन्द्रसमां कीर्तिं मैत्रीं सर्वजनानुगाम् ।
कन्दर्पसमरूपत्वं धीरत्वं बुधपूज्यताम् ॥ ८६६ ॥

आदेयत्वमरोगित्वं सर्वसत्त्वानुकम्पिता।
धनं धान्यं धरा धाम सौख्यं सर्वजनाधिकम् ॥ ८६७ ॥
गम्भीरां मधुरां वाणीं सर्वश्रोत्रमनोहराम्।
निःशेषशास्त्रनिष्णातां बुद्धिं ध्वस्ततमोमलाम् ॥ ८६८ ॥
घण्टाकाहलभृङ्गारचन्द्रोपकपुरःसरम्।
विधाय पूजनं देयं भक्तितो जिनसद्मनि ॥ ८६९ ॥
चतुर्विधस्य संघस्य भक्त्यारोपितमानसैः।
दानं चतुर्विधं देयं संसारोच्छेदमिच्छुभिः ॥ ८७० ॥
यावज्जीवं जनो मौनं विधत्ते चातिभक्तितः।
नोद्द्योतनं परं कृत्वा निर्वाहात्कथितं जनैः ॥ ८७१ ॥
एवं त्रिधापि यो मौनं विधत्ते विधिवन्नरः।
न दुर्लभं त्रिलोकेऽपि विद्यते तस्य किंचन ॥ ८७२ ॥
विचित्रशिखराधारं विचित्रध्वजमण्डितम्।
विधातव्यं जिनेन्द्राणां मन्दिरं मन्दिरोपमम् ॥ ८७३ ॥
येनेह कारितं सौधं जिनभक्तिमता भुवि।
स्वर्गापवर्गसौख्यानि तेन हस्ते कृतानि वै ॥ ८७४ ॥
यावत्तिष्ठति जैनेन्द्रमन्दिरं धरणीतले।
धर्मस्थितिः कृता तावज्जैनसौधविधायिना ॥ ८७५ ॥
येनाङ्गुष्ठप्रमाणार्च्या जैनेन्द्री क्रियतेऽङ्गिना।
तस्याप्यनश्वरी लक्ष्मीर्न दूरे जातु जायते ॥ ८७६ ॥
यः करोति जिनेन्द्राणां पूजनं स्नपनं नरः।
स पूजामाप्य निःशेषां लभते शाश्वतीं श्रियम् ॥ ८७७ ॥
सम्यक्त्वज्ञानभाजो जिनपतिकथितं ध्वस्तदोषप्रपञ्चं
संसारासारभीता विदधति सुधियो ये व्रतं श्रावकीयम्।
भुक्त्वा भोगान्नरोगान्वरयुवतियुताः स्वर्गमर्त्येश्वराणां
ते नित्यानन्तसौख्यं शिवपदमपदं व्यापदं यान्ति मर्त्याः॥८७८॥

इति श्रावकधर्मनिरूपणम् ॥ ३१ ॥

प्रणम्य सर्वज्ञमनन्तमीश्वरं जिनेन्द्रचन्द्रं धुतकर्मबन्धनम्।
विनाश्यते येन दुरन्तसंसृतिस्तदुच्यते मोहतमोपहं तमः॥ ८७९॥
विनिर्मलानन्तसुखैककारणं दुरन्तदुःखानलवारिदागमम्।
द्विधा तपोभ्यन्तरबाह्यभेदतो वदन्ति षोढा पुनरेकशो जिनाः॥८८०॥
करोति साधुर्निरपेक्षमानसो विमुक्तये मन्मथशत्रुशान्तये।
तदात्मशक्त्यानशनं तपस्यता विधीयते येन मनःकपिर्वशम्॥ ८८१॥
शमाय रागस्य वशाय चेतसो जयाय निद्रातमसो बलीयसः।
श्रुताप्तये संयमसाधनाय च तपो विधत्ते मितिभोजनं मुनिः॥ ८८२॥
विचित्रसंकल्पलतां विशालिनीं यतो यतिर्दुःखपरम्पराफलम्।
लुनाति तृष्णाव्रततिं समूलतस्तदेव वेश्मादिनिरोधनं तपः॥ ८८३॥
विजित्य लोकं निखिलं सुरेश्वरा वशं न नेतुं प्रभवो भवन्ति ये।
प्रयाति येनाक्षगणः स वश्यतां रसोज्झनं तन्निगदन्ति साधवः॥८८४॥
विचित्रभेदा तनुबाधनक्रिया विधीयते या श्रुतिसूचितक्रमात्।
तपस्तनुक्लेशमदः प्रचक्ष्यते मनस्तनुक्लेशविनाशनक्षमम्॥ ८८५॥
यदासनं स्त्रीपशुषण्ढवर्जितो मुनिर्निवासे पठनादिसिद्धये।
विविक्तशय्यासनसंज्ञिकं तपस्तपोधनस्तद्विदधाति मुक्तये॥ ८८६॥
मनोवचःकायवशादुपागतो विशोध्यते येन मलो मनीषिभिः।
श्रुतानुरूपं मलशोधनं तपो विधीयते तद्व्रतशुद्धिहेतवे॥ ८८७॥
प्रयाति रत्नत्रयमुज्ज्वलं तपो यतो हिनस्त्यर्जितकर्म सर्वथा।
यतः सुखं नित्यमुपैति पावनं विधीयतेऽसौ विनयो यतीश्वरैः॥८८८॥
तपोधनानां व्रतशीलशालिनामनेकरोगादिनिपीडितात्मनाम्।
शरीरतो प्राशुकभेषजेन च विधीयते व्यापृथिरुज्ज्वलादरात्॥ ८८९॥
नियम्यते येन मनोऽतिचञ्चलं विलीयते येन पुरार्जितं रजः।
विहीयते येन भवाश्रवोऽखिलः स्वधीयते तज्जिनवाक्यमर्चितम्॥८९०॥
ददाति यत्सौख्यमनन्तमव्ययं तनोति बोधं भुवनावबोधकम्।
क्षणेन भस्मीकुरुते च पातकं विधीयते ध्यानमिदं तपोधनैः॥ ८९१॥

यतो जनो भ्राम्यति जन्मकानने यतो न सौख्यं लभते कदाचन ।
यतो व्रतं नश्यति मुक्तिकारणं परिग्रहोऽसौ द्विविधो विमुच्यते ॥ ८९२ ॥
इदं तपो द्वादशभेदमर्चितं प्रशस्तकल्याणपरम्पराकरम् ।
विधीयते यैर्मुनिभिस्तमोपहं न लभ्यते तैः किमु सौख्यमव्ययम् ॥८९३॥
तपोनुभावो न किमत्र बुध्यते विशुद्धबोधैरियताक्षगोचरैः ।
यदन्यनिःशेषगुणैरपाकृतं तपोधिकश्चेज्जगतापि पूज्यते ॥ ८९४ ॥
विवेकिलोकैस्तपसो दिवानिशं विधीयमानस्य विलोकितां गुणः ।
तपो विधत्ते स्वहिताय मानवः समस्तलोकस्य च जायते प्रियः ॥८९५॥
तनोति धर्मं विधुनोति कल्मषं हिनस्ति दुःखं विदधाति संमदम् ।
चिनोति सत्त्वं विनिहन्ति तामसं तपोऽथवा किं न करोति देहिनाम् ८९६
अवाप्य नृत्वं भवकोटिदुर्लभं न कुर्वते ये जिनभाषितं तपः ।
महार्घरत्नाकरमेत्य सागरं वजन्ति ते गारमरत्नसंग्रहाः ॥ ८९७ ॥
अपारसंसारसमुद्रतारकं न तन्वते ये विषयाकुलास्तपः ।
विहाय ते हस्तगतामृतं स्फुटं पिबन्ति मूढाः सुखलिप्सया विषम् ॥८९८॥
जिनेन्द्रचन्द्रोदितमस्तदूषणं कषायमुक्तं विदधाति यस्तपः ।
न दुर्लभं तस्य समस्तविष्टपे प्रजायते वस्तु मनोज्ञमीप्सितम् ॥ ८९९ ॥
अहो दुरन्ताय गतो विमूढतां विलोक्य तां संसृतिदुःखदायिनीम् ।
सुसाध्यमप्यन्नविधानतस्तपो यतो जनो दुःखकरोऽवमन्यते ॥ ९०० ॥
कृतः श्रमश्चेद्विफलो न जायते कृतः श्रमश्चेद्ददतेऽनघं सुखम् ।
कृतः श्रमश्चेद्विवृते फलाय च न स श्रमः संसुजनेन मन्यते ॥ ९०१ ॥
श्रमं विना नास्ति महाफलोदयः श्रमं विना नास्ति सुखं कदाचन ।
यतस्ततः साधुजनैस्तपःश्रमो न मन्यतेऽनन्तसुखो महाफलः ॥ ९०२ ॥
अहर्निशं जागरणोद्यतो जनः श्रमं विधत्ते विषयेच्छया यथा ।
तपःश्रमं चेत्कुरुते तथा क्षणं किमश्नुतेऽनन्तसुखं न पावनम् ॥ ९०३ ॥
समस्तदुःखक्षयकारणं तपो विमुच्य योगी विषयान्निषेवते ।
विहाय सोऽनर्घ्यमणिं सुखावहं विचेतनः स्वीकुरुते बतोपलम् ॥ ९०४ ॥

अनिष्टयोगात्प्रियविप्रयोगतः परापमानाद्धनहीनजीवितात् ।
अनेकजन्मव्यसनप्रबन्धतो बिभेति नो यस्तपसो बिभेति सः ॥ ९०५ ॥

न बान्धवा न स्वजना न वल्लभा न भृत्यवर्गाः सुहृदो न चाङ्गजाः ।
शरीरिणस्तद्वितरन्ति सर्वथा तपो जिनोक्तं विदधाति यत्फलम् ॥ ९०६ ॥

भुक्त्वा भोगानरोगानमरयुवतिभिर्भ्राजिते स्वर्गवासे
मर्त्यावासेऽप्यनर्घ्याञ्शशिविशदयशोराशिशुक्लीकृताशः ।
यात्यन्तेऽनन्तसौख्यां विबुधजननुतां मुक्तिकान्तां यतोऽङ्गी
जैनेन्द्रं तत्तपोऽलं धुतकलिलमलं मङ्गलं नस्तनोतु ॥ ९०७ ॥

दुःखक्षोणीरुहाढ्यं दहति भववनं यच्छिखीवोद्यदर्चि-
र्यत्पूतं धूतबाधं वितरति परमं शाश्वतं मुक्तिसौख्यम् ।
जन्मारिं हन्तुकामा मदनमदभिदस्त्यक्तनिःशेषसङ्गा-
स्तज्जैनेशं तपो ये विदधति यतयस्ते मनो नः पुनन्तु ॥ ९०८ ॥

जीवाजीवादितत्त्वप्रकटनपटवो ध्वस्तकन्दर्पदर्पा
निर्धूतक्रोधयोधा मुदि मदितमदा हृद्यविद्यानवद्या ।
ये तप्यन्तेऽनपेक्षं जिनगदिततपोमुक्तये मुक्तसङ्गा-
स्ते मुक्तिं मुक्तबाधाममितगतिगुणाः साधवो नो दिशन्तु ॥ ९०९ ॥

ये विश्वं जन्ममृत्युव्यसनशिखिशिखालीढमालोक्य लोकं
संसारोद्वेगवेगप्रचकितमनसः पुत्रमित्रादिकेषु ।
मोहं मुक्त्वा नितान्तं धृतविपुलशमाः सद्मवासं निरस्य
याताश्चारित्रकृत्यै धृतिविमलधियस्तान्स्तुवे साधुमुख्यान् ॥ ९१० ॥

यस्मिञ्शुम्भद्घनोत्थज्वलनकवलनाद्भस्मतां यान्त्यघौघाः
प्रोद्यन्मार्तण्डचण्डस्फुरदुरकिरणाकीर्णदिक्चक्रवालाः ।
भूमिर्भूत्यां समन्तादुपचिततपनासंयता ग्रीष्मकाले
तस्मिंश्शैलाग्रमुग्रं धृतविततधृतिच्छत्रकाः प्रश्रयन्ते ॥ ९११ ॥

चञ्चद्विद्युत्कलत्राः प्रचुरकरविकावर्णधाराः क्षपन्ते
यत्रेन्द्रेष्वासचित्राबधिरितककुभो मेघसंघा नदन्ति ।

व्यस्ताशाकाशदेशास्तरुतलमचलाः संश्रयन्ते क्षपासु
तत्रानेहस्यसङ्गाः सततगतिकृतारावभीमास्वभीताः ॥ ९१२ ॥
यत्र प्रालेयराशिद्रुमनलिनवनोन्मूलनोद्यत्प्रमाणः
सात्कारं दन्तवीणारुचिकृतिचतुरः प्राणिनां वाति वातः ।
विस्तीर्याङ्गं समग्रं प्रगतधृतिचतुर्वर्त्मगा योगिवर्या-
स्ते ध्यानासक्तचित्ताः पुरुशिशिरनिशाः शीतलाः प्रेरयन्ति॥९१३॥
चञ्चच्चारित्रचक्रप्रविचितचतुराः प्रोचवो(?)र्वीप्रचर्च्यां
पञ्चाचारे प्रचारः प्रचुररुचिचयाश्चारुचित्रत्रियोगाः ।
वाचामुच्चैः प्रपञ्चै रुचिरविरचनैरर्चनीयैरवर्च्यै
नित्यर्च्यं प्रार्च्यतानः पदमचलमनूचानकाश्चार्पयन्तु ॥ ९१४ ॥
आशीर्विध्वस्तकन्तोर्विपुलशमभृतः श्रीमतः कान्तकीर्तिः
सूरेर्यातस्य पारं श्रुतसलिलनिधेर्देवसेनस्य शिष्यः ।
विज्ञाताशेषशास्त्रो व्रतसमितिभृतामग्रणीरस्तकोपः
श्रीमान्मान्यो मुनीनाममितगतियतिस्त्यक्तनिःशेषसङ्गः ॥ ९१५ ॥

इति द्वादशविधतपश्चरणनिरूपणम् ॥ ३२ ॥

अलङ्घ्यमहिमालयो विपुलसत्त्ववात्रत्नधि-
र्वरस्थिरगभीरतो गुणमणिः पयोवारिधिः ।
समस्तजनता सतां श्रियमनश्वरीं देहिनां
सदा मतजलच्युतो विबुधसेवितो दत्तवान् ॥ ९१६ ॥
तस्य ज्ञातसमस्तशास्त्रसमयः शिष्यः सतामग्रणीः
श्रीमान्माथुरसंघसाधुतिलकः श्रीनेमिषेणोऽभवत् ।
शिष्यस्तस्य महात्मनः शमयुतो निर्धूतमोहद्विषः
श्रीमान्माधवसेनसूरिरभवत्क्षोणीतले पूजितः ॥ ९१७ ॥
कोपारातिविघातकोऽपि सकृपः सोमोऽप्यदोषाकरो
जैनोऽप्युग्रतरस्तपोगतभयो भीतोऽपि संसारतः ।
निष्कामोऽपि समिष्टमुक्तिवनितायुक्तोऽपि यः संयतः
सत्यारोपितमानसो धृतवृषोऽप्यर्च्यप्रियोऽप्यप्रियः ॥ ९१८ ॥

दलितमदनशत्रोर्भव्यनिर्व्याजबन्धोः
शमदमयममूर्तिश्चन्द्रशुभ्रोरुकीर्तिः।
**अमितगति**रभूद्यस्तस्य शिष्यो विपश्चि-
द्विरचितमिदमर्थ्यं तेन शास्त्रं पवित्रम्॥ ९१९॥
यः **सुभाषितसंदोहं** शास्त्रं पठति भक्तितः।
केवलज्ञानमासाद्य यात्यसौ मोक्षमक्षयम्॥ ९२०॥
यावच्चन्द्रदिवाकरौ दिवि गतौ भिन्नस्तमः शार्वरं
यावन्मेरुतरङ्गिणीपरिदृढौ नो मुञ्चतः स्वस्थितिम्।
यावद्याति तरङ्गभङ्गुरतनुर्गङ्गा हिमाद्रेर्भुवं
तावच्छास्त्रमिदं करोतु विदुषां पृथ्वीतले संमदम्॥ ९२१॥
समारूढे पूतत्रिदशवसतिर्विक्रमनृपे
सहस्रे वर्षाणां प्रभवति हि पञ्चाशदधिके(१०५०)।
समाप्ते पञ्चम्यामवति धरणीं मञ्जुनृपतौ
सिते पक्षे पौषे बुधहितमिदं शास्त्रमनघम्॥ ९२२॥

इत्यमितगतिविरचितसुभाषितरत्नसंदोहः समाप्तः।

